तदनलरूपं[1] सकलवर्णाद्यभूतमनुत्तरं प्रकाशात्मकं संवर्तानलः। चिदेव कला चित्कला विमर्शात्मिका सर्व[2]वर्णान्त्यभूतहार्धकलारूपा। तदुक्तं संकेतपद्धत्याम्—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः॥ इति।

बैन्दवासनसंरूढे संवर्तानलचित्कले यस्मिन् तत्, तथैवं त्रिकोणं शिवशक्तिसामरस्यरूपमहाबिन्दुम[3]यमध्यचक्रोत्पन्नत्वादम्बिकारूपम्। अष्टारस्थं त्रिकोण[4]स्पन्दत्रयसमुत्पन्नत्वादष्टकोणस्य [5]तत इदं त्रिकोणमष्टारस्थम्। स्वरावृतम् अकारादिबिन्द्वन्तपञ्चदशस्वरैस्त्रिधा विभक्तैराकलितरेखात्रयम्, अःस्वराक्रान्तमध्यम्। तदुक्तमभियुक्तैः—"विभाव्य च महात्र्यस्रं समरेखं स्वरोदरम्" (सु० ४१) इति। अयमर्थः—इदमेव त्रिकोणचक्रं नवचक्रात्मना परिणतं त्रिपुरादिनवचक्रेश्वरी-

अकार में ही उस समय लीन हो जाता है। सभी वर्णों के अन्त में स्थित विमर्शात्मक हार्धकला को ही यहाँ चित्कला कहा गया है। संकेतपद्धति में भी यह विषय वर्णित है—

सभी वर्णों का आदिभूत अकार प्रकाशात्मक परम शिव है। अन्तिम वर्ण हकार विमर्शात्मक चित्कला का स्वरूप है॥

त्रिकोण चक्र के मध्य में स्थित महाबिन्दु में ही संवर्तानल और चित्कला का स्थान है, यही अम्बिका रूप भी है, किन्तु शिव-शक्ति सामरस्य स्वरूप महाबिन्दुमय मध्यचक्र से ही त्रिकोण चक्र की उत्पत्ति होती है, अतः त्रिकोण चक्र को भी यहाँ अम्बिका रूप मान लिया गया है। यही त्रिकोणचक्र अष्टारचक्र में भी स्थित है, क्योंकि अष्टकोण नवयोनि चक्र त्रिकोण के तीन स्पन्दनों से बनता है। यह षोडश स्वरों से आवृत है। अकार से लेकर बिन्दुपर्यन्त १५ स्वरों को तीन हिस्सों में बाँटकर त्रिकोण चक्र की एक-एक रेखा में पाँच-पाँच स्वरों को और त्रिकोण के मध्य में १६वें स्वर अः को लिखा जाता है। सुभगोदयकार[1] शिवानन्द ने भी कहा है—

महात्र्यस्र, अर्थात् प्रथम मूल त्रिकोण की समान रेखाओं के मध्य में सभी स्वरों की भावना करनी चाहिए॥

ऊपर की तीन पंक्तियों का अभिप्राय यह है—यह त्रिकोण चक्र ही अन्ततः नौ चक्रों का रूप धारण कर लेता है तथा त्रिपुरा प्रभृति नौ चक्रेश्वरी देवियों और उनके कर-

१. चक्रं—घ. झ., चक्रं पररूपं—ग. ज. ने झ. उ.। २. वर्णानामन्तिमा—क., वर्णाभ्यन्तर—ग. झ. उ.। ३. 'मयमध्य' नास्ति—ख. ग. घ. उ.। ४. स्यन्द—ख. घ. ने.। ५. ततोऽष्टारस्थम्—ख. ग. ज. झ. उ.।

1. महार्थमंजरीकार महेश्वरानन्द के परमगुरु नित्याषोडशिकार्णव की टीका (ऋजुविमर्शिनी) के रचयिता शिवानन्द मुनि का यह ग्रन्थ नित्याषोडशिकार्णव के काशी संस्करण (पृ० २८४-२९६) में प्रकाशित हो चुका है।



करशुद्ध्यादितत्तन्मन्त्रनवककलितमष्टकोणमध्यगतं[1] षोडशस्वरावृतम् अम्बिकाशान्तासामरस्यरूपमहाबिन्दुमयसदाशिवासनारूढप्रकाशविमर्शात्मककामेश्वरकामेश्वर्यधिष्ठितमिति॥१४॥

उपरितनचक्रं सवासनमुत्पादयति—

**नवत्रिकोणस्फुरितप्रभारूपदशारकम्।**
**शक्त्यादिनवपर्यन्तदशार्णस्फूर्तिकारकम्॥१५॥**
**भूततन्मात्रदशकप्रकाशालम्बनत्वतः।**

नव च त्रिकोणं[3] च नवत्रिकोणानि। त्रिकोणशब्देन त्रिकोणमध्य[4]गतं बैन्दवं लक्ष्यते। नवत्रिकोणानां बैन्दवस्य च [5]परितः स्फुरिताः प्रतीयमानाः प्रभा दश, तद्रूपं दशारं यत्र। यद् यथा परिणमते तत् तथाविधम्। शक्तिः रेफः। तदुक्त[6]मुद्धा-

शुद्धि प्रभृति नौ मन्त्रों से संयुक्त हो जाता है। यही त्रिकोण चक्र जब अष्टकोण (नवयोनिचक्र) के मध्य में स्थित रहता है, तो १६ स्वरों से आवृत हो जाता है। इसी के मध्य में स्थित अम्बिका और शान्ता शक्ति के सामरस्य स्वरूप महाबिन्दु में सदाशिव रूपी आसन पर बैठे हुए प्रकाशविमर्शात्मक कामेश्वर और कामेश्वरी के युगल स्वरूप का निवास है॥१४॥

भावनापद्धति के साथ अब आगे के चक्रों की निष्पत्ति बताते हैं—

नवयोनि और त्रिकोण मध्यगत महाबिन्दु की प्रभा से दशार चक्र की निष्पत्ति होती है। इसमें यकार से लेकर क्षकार पर्यन्त दस वर्णों का स्फुरण होता है। यह दशार चक्र पांच महाभूत और पांच तन्मात्राओं के प्रकाश का आलम्बन है॥१५॥

नवत्रिकोण शब्द में द्वन्द्व समास होने से नवयोनि और त्रिकोण का ग्रहण होता है। त्रिकोण शब्द से यहाँ त्रिकोण के मध्य में स्थित बिन्दु का ग्रहण किया जाता है। नवयोनि (अष्टार) चक्र और बैन्दव चक्र से चारों तरफ फैली प्रकाश की किरणें ही दशार चक्र का रूप धारण कर लेती हैं। जो जिससे परिणत होता है, वह वैसा ही हो जाता है। इसका अभिप्राय यह है कि नवयोनि और बैन्दव चक्र के परिणाम से निष्पन्न यह चक्र दशार का रूप धारण कर लेता है। शक्ति शब्द से रेफ का ग्रहण किया जाता है।

१. 'मध्य' नास्ति—घ. ने. ज. झ. उक., कोणान्तः-उग.। २. णम्—ग. घ. ने. ज. झ. उ.। ३. णानि—च. झ.। ४. मध्यं—ख. ने. ज. उ.। ५. 'परितः' नास्ति—ख. ग. घ. ज. झ. उ.। ६. मध्याहारो—ग. घ. ब. उ.।

रोर्ध्वतन्त्रे [1]रमाशक्तिबीजोद्धारे—"चन्द्रः[2] शक्तिर्महाशक्तिर्ब्रह्माणी कालिकादिकम्" इति। शक्ते रेफस्यादिर्यकारः, शक्त्यादियकारमारभ्य नवानां [3]वर्णानां पर्यन्तगः क्षकारः, तेषां दशानां स्फूर्तिकारकम्। स्फूर्तिर्विमर्शः। यकारादिक्षकारान्तदशवर्णविमर्शकमित्यर्थः ॥१५॥

भूतानि पृथिव्यप्तेजोवाय्वाकाशाः, तन्मात्राः पञ्च गन्धरसरूपस्पर्शशब्दाः, तेषां दशानां प्रकाशा दश, तेषामालम्बनत्वात्[4]। शिवात्मकत्वात् पृथिव्याद्यर्थानाम्, शक्त्यात्मकत्वाद् यकारादिवर्णानाम्। तदुभयप्रकाशविमर्शमयदशकोणावृतमिदं चक्रमित्यर्थः। पृथिव्यादिक्षकारान्तवर्णदशकमयताकथनेन प्रथमदशारादिचक्रत्रयस्य स्थितिरूपता द्योत्यते।

---

रमा शक्ति के बीज का उद्धार करते समय उद्धारोर्ध्वतन्त्र में बताया गया है—"चन्द्र, शक्ति, महाशक्ति, ब्रह्माणी, कालिका आदि शब्द (इस बीज के वाचक हैं)"। शक्ति अर्थात् रेफ का आदि यकार है। [1]यकार से लेकर ळकार सहित नौ वर्णों के अन्त में क्षकार है। यह चक्र इन दस वर्णों की स्फूर्ति करता है। स्फूर्ति का अर्थ यहाँ विमर्श है। इसका तात्पर्य यह हुआ कि यकार से लेकर क्षकार पर्यन्त १० वर्णों का यहाँ विन्यास करना चाहिये ॥१५॥

पृथिवी, जल, तेज, वायु और आकाश—भूत कहलाते हैं। गन्ध, रस, रूप, स्पर्श और शब्द—ये हैं पांच तन्मात्राएँ। इन दस तत्त्वों के प्रकाश का आलम्बन यह दशार चक्र है। पृथिवी आदि दस तत्त्व शिवात्मक और यकार आदि दस वर्ण शक्त्यात्मक हैं। यह दशार चक्र भी प्रकाशविमर्शमय शिव-शक्ति के प्रकाश से घिरा हुआ है। पृथिवी आदि दस तत्त्व और यकारादि क्षकारान्त दस वर्णों से संयुक्त होने से प्रथम दशार आदि तीन चक्रों की स्थितिरूपता जानी जाती है।

---

१. परा–उ.। २. चन्द्र–उ.। ३. 'वर्णानां' नास्ति–ख. ने. ज. झ. उ.। ४. कत्वात्–ख. ग. ने. ज. झ.।

[1]. भास्करराय ने यहाँ 'शक्त्यादि' शब्द से मकार का ग्रहण किया है। उनके मत से इन दस वर्णों में ळकार की गणना नहीं की जाती और इस तरह से त्रिकोण से चतुर्दशार पर्यन्त चक्रों में सभी (पचास) वैखरी वर्णों का विन्यास पूर्ण हो जाता है। अमृतानन्द ५१ वैखरी वर्णों के पक्षधर लगते हैं। आगे मूल ग्रन्थ में (३।१००-१०१) भी इसी पद्धति से वैखरी वर्णों का विन्यास बताया गया है, किन्तु इस क्रम में मकार का विन्यास कहीं नहीं होने पाता। बीजाक्षरों में बिन्दु अनिवार्य तत्त्व है। मकार को बिन्दु का प्रतीक मानकर और इस तरह से प्रत्येक वर्ण में इसकी सत्ता समझ कर मूल ग्रन्थ और अमृतानन्द की व्याख्या की संगति बैठाई जा सकती है।



द्वितीयदशारमाह—

**द्विदशारस्फुरद्रूपं क्रोधीशादिदशार्णकम् ॥१६॥**

द्वितीयदशारं द्विदशारम्। [1]रूप्यन्त इति रूपा इन्द्रियार्था दश, शब्दादयो वचनादयश्च, द्वितीयदशारतया स्फुरन्तो रूपा यस्य तत् तथाविधम्। क्रोधीशः ककारः। ककारादिदशवर्णवत्। कोऽर्थः? बैन्दवत्रिकोणाष्टकोणचक्रेषु मध्यस्थितप्रकाशविमर्शमयदीपद्वयदीपितेषु तद्दशकप्रभाच्छायादशकद्वयमययकारादिपृथिव्यादिककारादिशब्दादिदशकद्वयात्मकं दशार([2]चक्रद्वयं जातमित्यर्थः। तदुक्तं कामकलाविलासे—

नवकोणमध्यमञ्चास्मिंश्चिद्दीपदीपिते दशके।
तच्छायाद्वितयमिदं) चक्रद्वयात्मना दृष्टम् ॥ (श्लो० २९–३०) इति।

ननु—"भूततन्मात्रदशकप्रकाशालम्बनत्वतः" (१।१६) इत्यत्रैव शब्दादीनामुक्तत्वात् पुनः "द्विदशारस्फुरद्रूपम्" (१।१६) इत्यत्रापि रूपशब्देनापि कथं

---

अब द्वितीय दशार चक्र का वर्णन करते हैं—

द्वितीय दशार चक्र इन्द्रियों के १० रूपों (विषयों) को स्फुरित करता है। इसमें ककार प्रभृति १० वर्णों का विन्यास किया जाता है ॥१६॥

द्वितीय दशार को ही यहाँ द्विदशार कहा गया है। रूप शब्द से इन्द्रियों के १० विषयों का ग्रहण होता है। शब्द आदि बुद्धीन्द्रियों के और वचन आदि कर्मेन्द्रियों के विषयों का स्फुरण करने वाला है यह द्वितीय दशार चक्र। क्रोधीश शब्द से ककार का ग्रहण होता है। यह चक्र ककार आदि १० वर्ण वाला है। इस श्लोक का अभिप्राय यह है कि बैन्दव, त्रिकोण और अष्टकोण चक्र मध्य में स्थित प्रकाशविमर्शमय दो दीपकों से आलोकित हैं। इनकी दस प्रभाओं के प्रतिबिम्ब से प्रथम दशार चक्र और द्वितीय दशार चक्र की निष्पत्ति होती है। इसी के साथ यकार प्रभृति दस वर्ण, पृथिवी प्रभृति दस तत्त्व प्रथम दशार में और ककार प्रभृति दस वर्ण, शब्द प्रभृति दस विषय द्वितीय दशार में अभिव्यक्त होते हैं। यह विषय कामकलाविलास में भी वर्णित है—

नवयोनि चक्र और मध्यत्रिकोण चक्र के मध्य में स्थित मञ्च, अर्थात् सदाशिवासन स्थानीय बिन्दुचक्र में विराजमान प्रकाशविमर्शमय ज्ञानदीपक की प्रभा की दस किरणों के द्विविध प्रतिबिम्ब से दो प्रकार के दशार चक्रों की निष्पत्ति देखी गई है ॥

यहाँ प्रश्न उठता है कि "भूततन्मात्र" प्रभृति श्लोक में ही शब्द प्रभृति विषयों का वर्णन हो चुका है, फिर "द्विदशार" प्रभृति श्लोक में पुनः रूप शब्द से उन्हीं का ग्रहण

---

१. 'रूप्यन्त'...'वचनादयश्च' नास्ति–ग. घ. ने. ज. झ. उ.। २. कोष्ठान्तर्गतः पाठः कपुस्तकं विहाय क्वापि न दृश्यते।

गृह्यन्ते ? मैवम्, तन्मात्रपदेन भूतसूक्ष्माणामनिन्द्रियगोचराणां ग्रहणम्, रूपशब्देन तु भूतगुणाः शब्दादयः श्रोत्रादिग्राह्या गृह्यन्ते, अतो न विरोधः ॥१६॥

चतुर्दशारमाह—

**चतुश्चक्रप्रभारूपसंयुक्तपरिणामतः ।**
**चतुर्दशाररूपेण संवित्तिकरणात्मना ॥१७॥**
**खेचर्यादिजयान्तार्णपरमार्थप्रथामयम् ।**

चत्वारि चक्राणि बैन्दवत्रिकोणाष्टकोणप्रथमदशाररूपाणि, तेषां प्रभाश्चतस्रः । विप्रकृष्टत्वात् प्रभामात्रमेव गम्यते । यथा बह्वो वृक्षा वनमिति नावयवभेदः, तथा[1] । तच्चक्रप्रभाचतुष्टयसंयुक्तस्य द्वितीयदशारस्य सन्निकृष्टत्वादवयवप्रतीतिस्तत्प्रभाचतुष्टयसभ[2]वेतद्वितीयदशा[3]रावयवदशकपरिणामत्वात् । चतुर्दशाररूपेण संवित्तिकरणात्मना । संवित्तिः ज्ञानम् । संवित्तिशब्देन क्रियापि लक्ष्यते । करणानि

कैसे हो सकता है ? इसका समाधान यह है कि तन्मात्र शब्द से शब्दतन्मात्रा प्रभृति सूक्ष्म भूतों का ग्रहण होता है, जो कि इन्द्रियगोचर नहीं हैं । रूप शब्द से शब्द प्रभृति भूत गुणों का ग्रहण किया जाता है, जो कि श्रोत्र प्रभृति इन्द्रियों से गृहीत होते हैं । इस तरह से यहाँ कोई विरोध नहीं है ।।१६।।

चतुर्दशार चक्र की भावना इस तरह से की जाती है—

चार चक्रों की प्रभा के साथ संयुक्त द्वितीय दशार की प्रभा से चतुर्दशार चक्र निष्पन्न होता है । यह चतुर्दश करणों का प्रतिनिधि है । टकार से लेकर भकार पर्यन्त १४ वर्णों का इसमें विन्यास किया जाता है ॥१७-१८॥

चार चक्र हैं बैन्दव, त्रिकोण, अष्टकोण और प्रथम दशार । इनसे चार प्रभाएँ छिटकती हैं । चतुर्दशार चक्र के इनसे दूर होने से वहाँ इनकी प्रभामात्र का दर्शन होता है । जैसे कि दूरी के कारण वन में वृक्षों की अलग-अलग पहचान नहीं होती, उसी तरह से चतुर्दशार चक्र में इनकी प्रभा की ही प्रतीति होती है, उनके अवयवों की नहीं । इन चार चक्रों की चार प्रभाओं के साथ चतुर्दशार चक्र में द्वितीय दशार के दस अवयवों का स्पष्ट दर्शन होता है, क्योंकि द्वितीय दशार चक्र की स्थिति उसके पास में ही है । इस तरह से चार चक्रों की चार प्रभाओं और द्वितीय दशार चक्र के दस अवयवों से मिलकर यह चक्र बनता है । इसका यह चतुर्दशार रूप संवित्तिकरणात्मक है । संवित्ति ज्ञान को कहते हैं। इस ज्ञान के साथ क्रिया भी जुड़ी हुई है । इसका यह अभिप्राय हुआ कि यह ज्ञान और क्रिया शक्ति के स्फुरण से आविर्भूत चतुर्दशार चक्र श्रोत्र प्रभृति

१. तथा तच्चक्रभेदः–ख. ने. ज. । २. समेत–ख. ग. ज. झ. उ. । ३. दशा-रावयववत् । चतु–ख. ग. घ. ज. झ. ।



इन्द्रियदशकं श्रोत्रादिकं वागादिकं च, मनोबुद्ध्यहङ्कारचित्तानि चतुर्दश, तदात्मना ॥१७॥

खेचरी टकारः, जया भकारः, टकारादिभकारान्ताश्चतुर्दश वर्णाः, तेषां परमार्थप्रथा कारणभूता प्रथा विमर्शस्तन्मयम् । कोऽर्थः ? मध्यचक्रमेव त्रिकोणाष्टकोणद्विदशकोणक्रमेण [1]श्रोत्रादिज्ञानेन्द्रियवागादिकर्मेन्द्रियमनोबुद्ध्यहङ्कारचित्तात्मककरणचतुर्दशक - टकारादिभकारान्तवर्णचतुर्दशक[2]प्रकाशविमर्शमयचतुर्दशार - रूपेण परिण[3]तमित्यर्थः ।

त्रिकोणचक्रस्य—"अम्बिकारूपमेवेदमष्टारस्थं स्वरावृतम्" (१।१४) इत्यत्राम्बिकारूपतामुक्त्वेदानीमष्टारादिचतुर्दशारपर्यन्तस्य श्रीचक्रस्य रौद्रीरूपतामाह—

**एवं शक्त्यनलाकारस्फुरद्रौद्रीप्र[4]भामयम् ॥१८॥**

एवमुक्तप्रकारेण शक्त्यनलाकारेण पञ्चशक्तिचतुर्वह्निरूपेण स्फुरच्चक्रं द्विचत्वारिंशद्योन्यात्मकं रौद्रीप्र[4]भामयं रौद्रीशक्तिविस्फारविजृम्भितमित्यर्थः ॥१८॥

पाँच ज्ञानेन्द्रियमय, वाक्प्रभृति पाँच कर्मेन्द्रियमय और मन, बुद्धि, अहंकार तथा चित्त नामक अन्तःकरण चतुष्टयमय है ॥१७॥

खेचरी से टकार का और जया से भकार का ग्रहण होता है । टकार से लेकर भकार पर्यन्त १४ वर्णों की परमार्थ प्रभा, अर्थात् इन वर्णों की कारणभूत विमर्शशक्ति इनमें विराजमान है । इसका अभिप्राय यह है कि मध्यचक्र ही, अर्थात् मध्यचक्र में विराजमान विमर्शशक्ति ही त्रिकोण, अष्टकोण, प्रथम दशार और द्वितीय दशार के क्रम से श्रोत्र प्रभृति ज्ञानेन्द्रिय, वाक् प्रभृति कर्मेन्द्रिय और मन, बुद्धि, अहंकार तथा चित्तात्मक अन्तःकरण चतुष्टय को मिलाकर चौदह करणों एवं टकार से लेकर भकार पर्यन्त १४-वर्णों के रूप में परिणत होती है । इस तरह से प्रकाशविमर्शमय तत्त्वात्मक और वर्णात्मक चतुर्दशार चक्र निष्पन्न होता है ।

त्रिकोण चक्र को पहले (१।१४) अम्बिकाशक्तिमय बताया गया है । अब यहाँ अष्टार से लेकर चतुर्दशार पर्यन्त चक्रों की रौद्रीमयता का प्रतिपादन किया जा रहा है—

इस तरह से शक्तिचक्रों और वह्निचक्रों के संयोग से बने चक्र रौद्री शक्ति की प्रभा से स्फुरित हैं ॥१८॥

इस तरह से ऊपर बताई गई पद्धति से पाँच शक्तिचक्रों और चार वह्निचक्रों के स्फुरण से निष्पन्न ४२ योनिमय यह चक्रसमूह रौद्री शक्ति का ही अनोखा विस्तार है ॥१८॥

१. 'श्रोत्रादि''''भकारान्तवर्ण' नास्ति–ख. । २. दशकं–ख. ने. । ३. णमत इ–ख. ग. घ. ने. ज. उ. । ४. प्रथा–ने. ज. झ. ।

शिष्टं चक्रमाह—

**ज्येष्ठारूपचतुष्कोणं वामारूपभ्रमित्रयम् ।**

ज्येष्ठाशक्तिरूपाणि चतुष्कोणानि [1]चतुरस्राणि [2]त्रीणि यस्य तज्ज्येष्ठारूपचतुष्कोणम् । वामाशक्तिरूपं भ्रमित्रयं वृत्तत्रयं यस्य तत् । भ्रमित्रयशब्देन तदन्तरालस्थितपद्मद्वयमपि लक्ष्यते । अत्र वक्ष्यति[3]—"पद्मद्वयेन चान्यः स्याद् भूगृहत्रितयेन च" (१।७४) इति । अत्र वामारूपभ्रमित्रयं ज्येष्ठारूपचतुष्कोणमिति पाठे युक्तेऽप्यम्बिकादिशक्तिपाठक्रमा[4]ज्ज्येष्ठारूपचतुष्कोणं वामारूपभ्रमित्रयमित्युक्तं देवेन ।

---

अब बचा हुआ चक्र इस प्रकार उपदिष्ट है—

इस श्रीचक्र का चतुष्कोण ज्येष्ठाशक्तिमय और वृत्तत्रय वामाशक्तिमय है।

इस श्रीचक्र के तीन चतुरस्र ज्येष्ठा शक्ति के विस्फार से और वृत्तत्रय वामा शक्ति के विस्फार से प्रकट होते हैं । भ्रमित्रय (वृत्तत्रय) शब्द से उनके बीच में विद्यमान अष्टदल और षोडशदल पद्मों का भी ग्रहण किया जाता है । [1]आगे (१।७४) इस विषय को स्पष्ट किया जायगा । श्रीचक्र में भ्रमित्रय की पहले तथा चतुरस्र की बाद में स्थिति है, किन्तु यहाँ चतुरस्र का पहले तथा भ्रमित्रय का बाद में वर्णन है । इसका कारण यह है कि यहाँ पर अम्बिका प्रभृति चार शक्तियों की श्रीचक्र में स्थिति बताई[2] गई है । उन शक्तियों के क्रम में ज्येष्ठा की पहले और वामा की बाद में स्थिति होने से उनके अनुसार चक्रों के क्रम को बदल दिया गया है ।

---

१. चतुरस्ररूपाणि यस्य-ख. ग. ने. ज. । २. 'त्रीणि' नास्ति-झ. उ. । ३. वक्ष्यते च-ख. ग. घ. ने. झ. उ. । ४. क्रमायातत्तया-ख. झ. ।

1. आगे (१।७३-७५) परिपूर्ण महाचक्र की त्रिविध भावना का वर्णन करते हुए वृत्तत्रय के अन्तरालवर्ती अष्टदल और षोडशदल पद्मों का उल्लेख किया गया है ।

2. श्रीचक्र की अम्बिकारूपता का १४वें श्लोक में, रौद्रीरूपता का १८वें और ज्येष्ठा एवं वामारूपता का वर्णन १९वें श्लोक में है । यहाँ अम्बिका, रौद्री, ज्येष्ठा और वामा नामक चार शक्तियों के क्रम के आधार पर श्रीचक्र के क्रम में परिवर्तन कर दिया गया है, अर्थात् श्रीचक्र के विस्तार के क्रम में वृत्तत्रय की पहले तथा चतुष्कोण की स्थिति बाद में है, किन्तु शक्तिक्रम में रौद्री शक्ति की प्राथमिकता के आधार पर चतुरस्र का उल्लेख यहाँ पहले कर दिया गया है ।



पुनरस्यैव चक्रस्य वासनान्तरमाह—

**चिदंशान्तस्त्रिकोणं च शान्त्यतीताष्टकोणकम् ॥१९॥**
**शान्त्यंशद्विदशारं च तथैव भुवनारकम् ।**
**विद्याकलाप्रभारूपदलाष्टकसमावृतम् ॥२०॥**
**प्रतिष्ठावपुषा स्पष्टस्फुरद्द्व्यष्टदलाम्बुजम् ।**
**निवृत्त्याकारविलसच्चतुष्कोणविराजितम् ॥२१॥**

चिदंशः चित्कला, तन्मयमन्तस्त्रिकोणम् । शान्त्यतीता[2]-शान्ति-विद्या-प्रतिष्ठा-निवृत्तयो गगनादिपञ्चभूतकलाः । तन्मयमेतच्चक्रमित्यर्थः । अवयवार्थस्तु स्पष्ट एव ॥१९-२१॥

अस्यैव चक्रस्य संहारक्रमेण वासनान्तरमाह "त्रैलोक्यमोहनाद्ये तु" इत्यादि 'क्रिया शेषम्" इत्यन्तेन (श्लो० २२-२४)—

---

पुन: इसी चक्र की भावना का दूसरा प्रकार बताते हैं—

इस श्रीचक्र का बिन्दु और त्रिकोण चित्कलामय, अष्टकोण शान्त्यतीतकलामय, प्रथम और द्वितीय दशार एवं चतुर्दशार शान्तिकलामय, अष्टदल विद्याकला-प्रभामय, षोडशदल प्रतिष्ठाकलामय और चतुरस्र चक्र निवृत्तिकला का विलास है ॥१९-२१॥

चिदंश का अर्थ है चित्कला । अन्तस्त्रिकोण अर्थात् मध्यत्रिकोण चक्र और उसके मध्य में विराजमान बिन्दुचक्र दोनों चित्कला के विस्फार ( विस्तार ) से स्फुरित होते हैं । शान्त्यतीत, शान्ति, विद्या, प्रतिष्ठा, और निवृत्ति ये पाँच क्रमशः आकाश आदि पञ्च महाभूतों की कलाएँ हैं । अवशिष्ट चक्र इन पाँच कलाओं से ही उन्मीलित हुआ है । बाकी शब्दों का अर्थ स्पष्ट है ॥ १९-२१ ॥

श्रीचक्र की ऊपर बताई गई द्विविध वासना सृष्टि क्रम[1] के अनुसार है, अब २२ वें से लेकर २४ वें श्लोक तक संहार क्रम से भावना बताई जा रही है—

---

१. प्रथा-उ. । २. तीत-घ. ने. ज. झ. उ. ।

1. बिन्दु से चतुरस्र पर्यन्त क्रम सृष्टि तथा चतुरस्र से बिन्दु पर्यन्त क्रम संहार कहलाता है । यहीं आगे ( १।७७-७८ ) इस बात को दिखाया गया है । दोनों ही पद्धतियों से श्रीचक्र की पूजा विहित है । भावना भी उसी पद्धति से की जाती है । योगिनीहृदय में आगे ( १।५४ ) सृष्टि क्रम से वासना वर्णित है । अपनी व्याख्या में इसी क्रम को प्रधानता देने के अभिप्राय से अमृतानन्द ने सुभगोदयवासना के श्लोकों का क्रम बदल दिया है । वस्तुतः वहाँ संहार क्रम से श्रीचक्र की वासना वर्णित है ।

**त्रैलोक्यमोहनाद्ये तु नवचक्रे सुरेश्वरि ।**
**नादो बिन्दुः कला ज्येष्ठा रौद्री वामा तथा पुनः ॥२२॥**
**विषघ्नी दूतरी चैव सर्वानन्दा क्रमात् स्थिताः ।**

अत्र तुशब्दः पूर्वोक्तकामकलारूपत्वप्रतिपादनप्रसङ्गपरिसमाप्तौ । त्रैलोक्यमोहनाद्ये तु इत्यत्र आद्यशब्देन[1] सर्वाशापरिपूरकादिचक्राण्युच्यन्ते । तेषां नामान्युत्तरत्र वक्ष्यति । त्रैलोक्यमोहनाद्ये नवचक्रे, जातावेकवचनम्, त्रैलोक्यमोहनाद्येषु[2] नवचक्रेष्वित्यर्थः । नादादिसर्वानन्दान्ता नव शक्तयस्त्रैलोक्यमोहनादिबैन्दवान्तनवचक्रेषु क्रमेणाधिवसन्तीत्यर्थः । पदार्थः स्पष्ट एव ॥२२-२३॥

पूर्वम् "अम्बिकारूपमेवेदम्" (१।१४) इत्यादिना प्रकाशांशानामम्बिकादीनां चतुर्णां त्रिकोणादिचतुरस्रान्तवासनामयतामुक्त्वेदानीं विमर्शांशानां शान्तादीनां चतुर्णां चतुरस्रादिबैन्दवान्त[3]चक्रमयतावासनामाह—

**निरंशौ नादबिन्दू च कला चेच्छास्वरूपकम् ॥२३॥**
**ज्येष्ठा ज्ञानं क्रिया शेषम्**

हे सुरेश्वरि ! त्रैलोक्यमोहन (चतुरस्र) प्रभृति नौ चक्रों में क्रमशः नाद, बिन्दु, कला, ज्येष्ठा, रौद्री, वामा, विषघ्नी, दूतरी और सर्वानन्दा ये नौ शक्तियां निवास करती हैं ॥ २ -२३ ॥

श्लोक में आये 'तु' शब्द का अभिप्राय यह है कि अब तक चला आ रहा कामकला का प्रसंग यहाँ समाप्त हो जाता है । आद्य शब्द से त्रैलोक्यमोहन चक्र के साथ सर्वाशापरिपूरक आदि चक्रों संग्रह होता है। इनके नाम आगे ( १।८२-८४ ) बताये जायेंगे । त्रैलोक्यमोहनाद्ये नवचक्रे—यहाँ एकवचन समस्त चक्रजाति का वाचक है, उसका अर्थ होगा त्रैलोक्यमोहन आदि नौ चक्रों में । नाद से लेकर सर्वानन्दा पर्यन्त नौ शक्तियाँ त्रैलोक्यमोहन से लेकर बैन्दव पर्यन्त नौ चक्रों में क्रमशः निवास करती हैं । बाकी शब्दों का अर्थ स्पष्ट है ।। २२-२३ ।।

पहले ( १।१४ ) प्रकाश की अंशभूत अम्बिका प्रभृति चार शक्तियों की त्रिकोण से चतुरस्र पर्यन्त भावना का प्रकार बताया गया है, अब यहाँ विमर्श की अंशभूत शान्ता प्रभृति चार शक्तियों की चतुरस्र से लेकर बैन्दवचक्र पर्यन्त भावना का प्रकार बताते हैं—

नाद और बिन्दु निरंश हैं, अर्थात् शान्ताशक्तिमय हैं । कला इच्छाशक्तिमय, ज्येष्ठा ज्ञानशक्तिमय तथा बची पाँच शक्तियां क्रियाशक्तिमय हैं ॥२३॥

१. शब्दात्–ख. ग. घ. ने. ज. झ. उ. । २. द्येष्वित्यर्थः–ख. ग. घ. ने. ज. झ. उ. । ३. वाष्टचक्र–ग. घ., बान्तचक्रनवकवा–ख. ज. ।



निरंशा[1] शान्ता शक्तिः, शान्ताया निरंशत्वं चिद्रूपत्वात् । तेन निरंशौ नादबिन्दू द्वावपि शान्ताशक्तिमयौ । नादबिन्दुरूपं चतुरस्रषोडशदलात्मकं चक्रद्वयं शान्ताशक्तिमयमित्यर्थः । कला चेच्छास्वरूपकम् इच्छायाः स्वरूपं कलारूपम्, अष्टदलपद्ममिच्छाशक्तिमयमित्यर्थः । ज्येष्ठा ज्ञानं ज्ञानशक्तिरेव ज्येष्ठारूपम्, चतुर्दशारं ज्ञानशक्तिमयमित्यर्थः । क्रिया शेषं रौद्री-वामा-विषघ्नी-दूतरी-सर्वा[2]-नन्दाख्यशक्तिपञ्चकरूपं द्विदशाराष्टकोणत्रिकोणबैन्दवाख्यचक्रपञ्चकं क्रियाशक्तिमयमित्यर्थः ॥२३॥

पूर्वं चक्रस्य "शून्याकारात्" (१।१०) इत्यारभ्य कामकलारूपतां प्रतिपाद्येदानीमुपसंहरति—

**इत्येवं त्रितयात्मकम् ।**
**चक्रं कामकलारूपं प्रसारपरमार्थतः ॥२४॥**

[3]एवम् उक्तप्रकारेण त्रितयात्मकं वामादिमातृशक्तित्रयमयं चक्रं बिन्दुत्रितयमयं कामकलाक्षररूपम् । प्रसारपरमार्थतः । यद् यस्मात् प्रसृतं तत् तस्य

शान्ता शक्ति निरंश है । इसको निरंश इसलिये कहते हैं कि यह चित्स्वरूपिणी है । ऊपर गिनाई गई नौ शक्तियों में से प्रथम दो—नाद और बिन्दु—शान्ता शक्तिस्वरूप हैं । इसका अभिप्राय यह हुआ कि नाद और बिन्दुमय चतुरस्र और षोडश दलात्मक दो चक्र शान्ता शक्तिमय हैं । कलास्वरूप अष्टदल पद्म इच्छाशक्तिमय और ज्येष्ठारूप चतुर्दशार ज्ञानशक्तिमय है । रौद्री, वामा, विषघ्नी, दूतरी, सर्वानन्दा नामक शक्तियों से क्रमशः संयुक्त द्विदशार (बहिर्दशार और अन्तर्दशार), अष्टकोण, त्रिकोण और बैन्दव नामक पाँच चक्र क्रियाशक्तिमय हैं ॥२३॥

यहाँ दसवें श्लोक से कामकला के स्वरूप के प्रतिपादक प्रकरण का उपक्रम हुआ था, अब उसका उपसंहार किया जा रहा है—

इस तरह से शक्तित्रयमय यह चक्र कामकलास्वरूप है, क्योंकि यह वास्तव में कामकला का ही विस्तार है ॥२४॥

ऊपर बताई गई पद्धति से प्रकाशात्मक प्रमाता की वामा प्रभृति तीन शक्तियों से संवलित यह श्रीचक्र तीन बिन्दुओं से बने कामकलाक्षर का ही विस्तार होने से तन्मय है । जो पदार्थ जिससे बनता है, उसमें उसी की वास्तविक सत्ता मानी जाती है और वह तत्स्वरूप ही होता है । जैसे कि मिट्टी घट का परमार्थ है, क्योंकि घड़ा मृण्मय ही है ।

१. निरंशः–ख. ने. ज. उ. । २. नन्देति–ख. घ. ने. झ. उ. । ३. 'एवम्''''परमार्थतः' नास्ति–ख. ग. घ. ने. ज. झ. उ. ।

परमार्थस्तद्रूपं च तत् । यदा मृद् घटस्य मृद्रूपश्च घटः, तन्तवः पटस्य तन्तुरूपश्च पटः । एवं कामकलाक्षरात् प्रसृतस्य [२]श्रीचक्रस्य कामकलाक्षरं परमार्थः, तद्रूपं [३]बैन्दवं चक्रमित्यर्थः ॥२४॥

पुनरस्यैव चक्रस्य प्रकारान्तरेण वासनान्तरमाह "अकुले विषुसंज्ञे च" इत्यादिना "परानन्दविघूर्णितम्" इत्यन्तेन (श्लो० २५-३५)—

**अकुले विषुसंज्ञे च शाक्ते वह्नौ तथा पुनः ।**
**नाभावनाहते शुद्धे लम्बिकाग्रे भ्रुवोऽन्तरे ॥२५॥**
**इन्दौ तदर्धे रोधिन्यां नादे नादान्त एव च ।**
**शक्तौ पुनर्व्यापिकायां समनोन्मनिगोचरे ॥२६॥**
**महाबिन्दौ**

[४]अकुले, कुलादन्यदकुलम्, सुषुम्नामूल[५]संस्थितारुणसहस्रदलकमलमकुलं[६] नाम । तदुपर्यष्टदल[७]पद्मोर्ध्वस्थितं षड्दलं कुलपद्मम् । तदुक्तं स्वच्छन्दसंग्रहे—

तन्तु पट का परमार्थ है, क्योंकि कपड़ा तन्तु (सूत) से ही बना है । इसो तरह से कामकलाक्षर से प्रसृत (विस्तृत) श्रीचक्र का परमार्थ कामकला ही है । इसका अभिप्राय यह है कि जैसे बैन्दव चक्र कामकलामय है, उसी तरह से बिन्दु और त्रिकोण चक्र के विस्तार से बना यह पूरा श्रीचक्र (श्रीयन्त्र) भी कामकलामय ही है ॥२४॥

फिर इसी चक्र की भावना का दूसरा प्रकार आगे के (२५-३५) श्लोकों में बताया जाता है—

विषु[1] संज्ञक अकुल चक्र में, शाक्त, वह्नि, नाभि, अनाहत, (वि)शुद्ध, लम्बिकाग्र और भ्रूमध्य चक्र में; बिन्दु, अर्धचन्द्र, रोधिनी, नाद, नादान्त, शक्ति, व्यापिका, समना और उन्मना में तथा महाबिन्दु में ॥२५-२६॥

अकुल चक्र कुल चक्र से भिन्न है । यह चक्र सुषुम्ना के मूल में स्थित है और इसमें लाल वर्ण का सहस्रदल कमल विराजमान है । इसके ऊपर अष्टदल पद्म और उसके ऊपर जो षड्दल कमल है, उसको कुलपद्म कहते हैं । इस विषय का विस्तार स्वच्छन्दसंग्रह में किया गया है—

१. मृण्यमश्च–ख. । २. 'श्री' नास्ति–घ. ने. ज. झ. उ. । ३. चेदं–ख. ग. ज. झ. उ. । ४. 'अकुले' नास्ति–ख. ग. घ. झ. उ. । ५. स्थितसहस्र–ख. ग. ज. झ. । ६. 'अकुलं' नास्ति-ख. ग. ज. झ. उ. । ७. दलोर्ध्व–ख. ग. घ. झ. ।

1. अकुल और विषु संज्ञक चक्रों की भिन्नता के विषय में अभी आगे विचार किया जायगा ।



अधश्चोर्ध्वं सुषुम्नायाः सहस्रदलसंयुतम् ।
रक्तं श्वेतं च साहस्रदलस्थं शक्तिभिर्युतम् ॥
ऊर्ध्वाधोमुखमीशानि कर्णिकाकेसरान्वितम् ।
शक्तिरूपं महादेवि[१] [२]कुलाकुलमयं शुभम् ॥
पङ्कजद्वयमीशानि स्थितं शाश्वतमव्ययम् ।
तयोर्मध्ये सुषुम्नान्तस्त्रिशदाधारपङ्कजम् ॥
शक्तिरूपं शिवाकारं शर्वाण्याः[३] सन्निजालयम् ।
तेषां रूपं क्रियां चैव [४]क्रमाद् वक्ष्येऽधुना शृणु ॥
गुदमेढ्रान्तरं देवि पञ्चाङ्गुलसमुच्छ्रितम्[५] ।
[६]कन्दमेकाङ्गुलं मध्ये द्वयाङ्गुलविसारणम् ॥
तस्य [७]मध्ये महायोनिस्त्रिकोणाकाररूपिणी ।
सुषुम्ना योनिमध्यस्था तस्या मूले महेश्वरि ॥
अधःपद्मं सहस्रारं कर्णिकाकेसरान्वितम् ।
तैजसं [८]रत्नसंदीप्तं तद्दलस्थितशक्तिभिः ॥

सुषुम्ना के नीचे और ऊपर सहस्रदल से संयुक्त रक्त और श्वेत वर्ण के दो पद्म हैं । हे ईशानि ! रक्तदल पद्म का मुँह ऊपर की तरफ तथा श्वेतदल पद्म का मुख नीचे की ओर है । ये दोनों पद्म शक्तिसमूह से आवृत हैं, कर्णिका और केसर से संयुक्त हैं । हे महादेवि ! शक्तिस्वरूप कुलाकुलमय ये शुभ पंकज शाश्वत और अव्यय हैं । इनकी यही स्थिति सदा बनी रहती है, अपनी इस स्थिति से ये कभी च्युत नहीं होते । इन दोनों पद्मों के बीच में सुषुम्ना के भीतर ३० आधार पंकज माने गये हैं । ये शिवशक्तिस्वरूप हैं और इनमें भगवती शर्वाणी (पार्वती) निवास करती हैं । इन आधार पंकजों के स्वरूप और कार्य को अब मैं बताता हूँ, तुम सुनो । हे देवि ! गुदा और मेढ्र (लिंग) के बीच में पाँच अंगुल की ऊँची जगह है । इसके बीच में एक अंगुल के ऊँचे और दो अंगुल विस्तार वाले स्थान को कन्द कहते हैं । इस कन्द स्थान के मध्य में त्रिकोण सदृश आकार वाली महायोनि विराजमान है । इस योनि के मध्य में सुषुम्ना नाडी अवस्थित है । हे महेश्वरि उसी सुषुम्ना नाडी के मूल में कर्णिका और केसर से संयुक्त नीचे वाला रक्तदल सहस्रार पद्म विराजमान है । यह तेजोमय पंकज रत्नों की प्रभा के समान उज्ज्वल है । हे प्रिये !

१. इतः परम्–'पर्वाङ्गुलसमुच्छ्रयम् । गुदमेकाङ्गुलं मध्ये' इत्यधिकं–ने. ज. उ. । २. द्वयाङ्गुलकुलाकुलम्–ज. । ३. सर्वेभ्यो मत्प्रियालयम्–क., सर्वाभ्यासनिजालयम्–ख. ने. झ. । ४. क्रमं–ख. ग. ने. ज. झ. । ५. छ्रयम्–ने. ज. उ. । ६. गुद–ख. ग. घ. ने. ज. झ. उ. । ७. मूले–ख. ग. ने. ज. झ. उ. । ८. रक्तवद्दीप्तं–घ. ने. ज. झ. उ. ।

प्रतिकिञ्जल्कसंस्थाभिः शक्तिभिः संवृतं प्रिये ।
कर्णिकामध्यतो देवि कुलदेवी च संस्थिता ॥
तत्पद्मोर्ध्वं सुषुम्नाया मध्ये त्वेकाङ्गुलोपरि ।
पद्ममष्टदलैर्युक्तमष्टग्रन्थिसमन्वितम् ॥
रक्तं सुकर्णिकोपेतं रक्तकिञ्जल्कशोभितम् ।
ग्रन्थ्यग्रस्थत्रिशृङ्गं[1] च ब्रह्माण्याद्यष्टभैरवैः ॥
अष्टपत्रस्थितग्रन्थिस्थित[2]वामादिशक्तिभिः ।
तदन्यशक्तिभिश्चैव शृङ्गस्थाभिः समावृतम् ॥
तन्मध्ये कौलशक्त्या तु सेवितं च स्मरेत् ततः ।
एकाङ्गुलप्रमाणोर्ध्वं षड्दलं कुलपङ्कजम् ॥ इति ।

ननु कुलादन्यदकुलमिति चेदर्थस्तर्हि तदन्तरालस्थिताष्टदलपद्मस्याप्यकुलत्वं किं न स्यादित्यत आह—विषुसंज्ञे चेति । "विष्लृ व्याप्तौ" (१०९५ जु०) । यत्

पंकज के प्रत्येक दल और केसर में विभिन्न शक्तियों का निवास है और हे देवि ! कर्णिका के मध्य में कुलदेवी विराजमान है ॥

इस पद्म के एक अंगुल ऊपर सुषुम्ना नाडी के मध्य में आठ दल और आठ ग्रन्थियों से युक्त लाल वर्ण का पद्म है । इसकी कर्णिका सुन्दर है और यह लाल वर्ण की केसर से सुशोभित है। प्रत्येक ग्रन्थि के अग्र भाग में त्रिकोण है और उनमें [1]आठ भैरवों के साथ आठ ब्रह्माणी प्रभृति देवियाँ विराजमान हैं। आठ दलों की ग्रन्थियों में वामा प्रभृति आठ शक्तियाँ विराजमान हैं और शृंग (केसर) में भी अनेक शक्तियों का निवास है । इन सबके बीच का स्थान कौल शक्ति से सेवित है, अर्थात् इस कमल की कर्णिका में कौल शक्ति निवास करती है। इस अष्टदल कमल से एक अंगुल ऊपर छः दल वाला कुल पंकज अवस्थित है ॥

यहाँ प्रश्न होता है कि ऊपर कुलचक्र से भिन्न चक्र को अकुल कहा गया है, इसके अनुसार दोनों के बीच में विद्यमान अष्टदल पद्म की भी अकुल संज्ञा हो जायगी । इसका समाधान यह है कि इसी आशंका की निवृत्ति के लिये 'अकुले' पद का 'विषुसंज्ञे'[2]

१. शृङ्गाग्रे–घ, शूलं च–उ. । २. वर्गादि–ख. ग. घ. ज. झ. ।

1. असिताङ्ग, रुरु, चण्ड, क्रोध, उन्मत्त, कपाली, भीषण और संहार नामक आठ भैरव तथा ब्रह्माणी, माहेशी, कौमारी, वैष्णवी, वाराही, इन्द्राणी, चामुण्डा और महालक्ष्मी नामक आठ देवियाँ मानी जाती हैं । वामा, ज्येष्ठा, रौद्री, कलविकरणी, बलविकरणी, बलप्रमथिनी, सर्वभूतदमनी और मनोन्मनी—ये आठ वामा प्रभृति शक्तियाँ हैं ।

2. अमृतानन्द ने यहाँ आठ ही स्थान माने हैं, जब कि भास्करराय को नौ स्थान अभिप्रेत हैं । इसीलिये वे अकुल से विषु चक्र की स्थिति भिन्न मानते हैं । उनका अनुमान है कि स्वच्छन्दसंग्रह में निर्दिष्ट अष्टदल और षड्दल कमल में से कोई एक प्राचीन तन्त्रों



सुषुम्नां तदन्तर्गतत्रिंशत्पङ्कजानि च व्याप्नोति, तत्सहस्रदलकमलं विषुवम्[1], [2]तस्य सर्वाधारत्वात् । ततो नाष्टदलकमलमकुलमित्यर्थः ।

शाक्ते वह्नाविति । अत्र वह्नौ शाक्त इति व्यत्ययेन पठितव्यम् । वह्निर्मूलाधारः, वह्निबिम्बाधारत्वात् । तदुक्तं स्वच्छन्दसंग्रहे—

आधारपङ्कजं पीतं चतुष्पत्रं सुकेसरम् ।
अधोमुखं च तन्मध्ये कुण्डली परमेश्वरी[3] ॥
स्वयम्भुमध्यगा चिन्त्या वरदादिभिरावृता[4] ।
पार्थिवं पङ्कजं ह्येतत् तस्योर्ध्वं[5] पङ्कजं परम् ॥

यह विशेषण दिया गया है । 'विष्लृ' धातु का अर्थ व्याप्ति होता है । जो चक्र सुषुम्ना नाडी और उसके मध्य में विद्यमान ३० पंकजों में व्याप्त है, वह सहस्रदल कमल विषुव कहलाता है, क्योंकि वही इन सबका आधार है । अष्टदल कमल इन सबमें व्याप्त नहीं है, अतः इसको अकुल (विषुव) नहीं कहा जायगा ।

'शाक्ते वह्नौ' इसको 'वह्नौ शाक्ते' इस क्रम से पढ़ना चाहिये । वह्नि शब्द से मूलाधार चक्र गृहीत होता है, क्योंकि यही वह्निबिम्ब का आधार है, जैसा कि स्वच्छन्दसंग्रह में वर्णित है—

आधार पंकज पीत वर्ण का चार दल वाला और सुन्दर केसर से संयुक्त है । यह चक्र अधोमुख है । इस चक्र के मध्य में स्वयम्भू लिंग विराजमान है । उस स्वयम्भू लिंग के बीच में [1]वरदा प्रभृति शक्तियों से घिरी हुई भगवती कुण्डलिनी का ध्यान

१. विषुवत्–ने. । २. 'तस्य' नास्ति–ग. ने. ज. झ. उ. । ३. इतः परम्–'तदुक्तं गोरक्षसंहितायाम्–योनिमध्ये महालिङ्गं पश्चिमाभिमुखं स्वधः । मस्तके मणिवद् भिन्नं यो जानाति स योगवित् ॥' इत्यधिकः पाठः–ग. उ. । ४. इतः परम्–'पृथिवीमण्डलं पीतं चतुरस्रं सुशोभनम् । तप्तचामीकराभासं तडिल्लेखेव विस्फुरत् ॥ चतुरस्रं पुरं वह्नेरधो मेढ्रादवस्थितम् । इति गोरक्षे' इत्यधिकः पाठः–ग. उ. । ५. तस्याधः–घ. ने. ज. झ. उ. ।

में विषु नाम से जाना जाता था । उनका यह अनुमान सही लगता है । दीपिकाकार ने अष्टदल पद्म का विशेष वर्णन किया है, षड्दल का केवल संक्षेप में उल्लेख कर दिया है । अतः अष्टदल पद्म की ही विषु संज्ञा होनी चाहिये । इस विषय पर उपोद्घात में विशेष चर्चा की जायगी । सकलनिष्कल भावना जैसे बिन्दु से उन्मना पर्यन्त नौ कलाओं में की जाती है, उसी तरह से सकल भावना के भी नौ ही स्थान होने चाहिये । आगे (३।१४२-१४४) स्वयं दीपिकाकार ने स्वच्छन्दसंग्रह के एक वचन को उद्धृत किया है, जिसमें नवाधार तथा षट्चक्रों का स्पष्ट उल्लेख है । छः चक्रों का उल्लेख मूलग्रन्थ (३।३०) में भी मिलता है ।

1. व श ष स इन चार अक्षरों की अधिष्ठात्री वरदा, श्री, षण्ढा और सरस्वती नामक देवियों का ध्यान यहाँ किया जाता है ।

तैजसं परमेशानि तन्मध्य[1]स्थितशक्तयः ।
निष्कलाः परमेशानि विद्युत्पुञ्जनिभाः स्मरेत् ॥
तदूर्ध्वे कर्णिकामध्ये वह्निबिम्बं तदूर्ध्वगम् ।
पूर्णपीठं च [2]तन्मध्ये शाकिनी संस्थिता शिवे ॥ इति ।

शाक्ते, शक्तिः हृल्लेखा, तदूर्ध्वस्थिततत्वाच्छाक्तं[3] स्वाधिष्ठानं [4]षडस्त्रकमलम् । तदुक्तं स्वच्छन्दसंग्रहे—

आधारपङ्कजस्योर्ध्वे सार्धद्वयङ्गुलकोपरि ।
तैजसं साष्टपत्रं च पीतकर्णिकया युतम् ॥
हृल्लेखाकर्णिकामध्ये स्थितानङ्गादिसेविते[5] ।
एतस्माद् द्वयङ्गुलादूर्ध्वे स्वाधिष्ठानं षडस्त्रकम् ॥
आप्यं च [6]बन्दिनीशक्तिपूर्वाभिः शक्तिभिर्वृताम्[7] ।
काकिनीमभिसंचिन्त्य .... .... .... ॥ इति ।

किया जाता है। यह पंकज पृथ्वी तत्त्व का प्रतिनिधि है। इसके ऊपर दूसरा तैजस पंकज विद्यमान है। हे परमेश्वरि ! इस चक्र में विद्युत्पुंज के समान देदीप्यमान निष्कल शक्तियों का ध्यान करना चाहिये। इस चक्र पर कर्णिका के मध्य में वह्निबिम्ब विद्यमान है और इसके ऊपर पूर्णगिरि पीठ है। हे शिवे ! यहाँ शाकिनी देवी निवास करती है।

शक्ति हृल्लेखा को कहते हैं। ऊपर वर्णित वह्निचक्र के ऊपर विद्यमान शाक्त षड्दल कमल स्वाधिष्ठान के नाम से प्रसिद्ध है। स्वच्छन्दसंग्रह में यह इस तरह से वर्णित है—

आधार पंकज से ढाई अंगुल के ऊपर तैजस कमल विद्यमान है। यह आठ दल वाला और पीतवर्ण की कर्णिका से युक्त है। इसकी कर्णिका में हृल्लेखा विद्यमान है और उसमें [1]अनङ्गा प्रभृति शक्तियाँ निवास करती हैं। इस अष्टदल चक्र से दो अंगुल ऊपर षड्दल स्वाधिष्ठान चक्र स्थित है। यह जल तत्त्व का प्रतिनिधि है। इसमें [2]बन्दिनी प्रभृति शक्तियों से घिरी हुई काकिनी देवी का ध्यान किया जाता है।

१. मध्ये सित–ग. घ. ने. ज. झ. उ.। २. तस्योर्ध्वे–ख. ग. घ. ने. झ. उ.। ३. शाक्तस्याधिष्ठान–ग. ने.। ४. 'षडस्त्रकमलम्' नास्ति–ख. ग. घ. ने. ज. उ.। ५. देवता–ख.। ६. वशिनी–ग. घ. ने. उ.। ७. वृतम्–ग. घ. ज. उ.।

1. नित्याषोडशिकार्णव (१।१७७-१७८) में वर्णित अनङ्गकुसुमा आदि आठ देवियों को यहाँ स्मरण किया गया लगता है।

2. ब भ म य र ल इन छः अक्षरों की अधिष्ठात्री बन्दिनी, भद्रकाली, महामाया, यशस्विनी, रक्ता और लम्बोष्ठिका नामक देवियों का ध्यान यहाँ किया जाता है।



नाभौ [1]दशदलकमले मणिपूरके । तदुक्तं तत्रैव—

नाभि[2]स्त्र्यर्धाङ्गुलोपरि ।
तत्पद्मं मणिपूरं च दशपत्रं सुशोभनम्[3] ॥
लाकिनीमध्यगं तच्च डामर्यादिभिरावृतम् । इति ।

अनाहते हृदयस्थाने द्वादशदलकमले । तदुक्तं तत्रैव—

चतुर्दशाङ्गुलादूर्ध्वे[4] मणिपूराख्यपङ्कजात् ।
पङ्कजं राकिनीमध्यं द्वादशारमनाहतम् ॥
तत्रस्थकालरात्र्यादिशक्तिभिश्च समावृतम् ।
तत्रस्थसूर्यबिम्बे[5] तु [6]नादोड्यानाख्यपीठकम् ॥ इति ।

शुद्धे कण्ठस्थितषोडशदलकमले । तदुक्तं तत्रैव—

तस्मादेकाङ्गुलादूर्ध्वे विशुद्धं षोडशारकम् ।
मध्यगा डाकिनी बाह्यपत्रेषु परमेश्वरि[7] ॥
अमृताद्यक्षरान्त[8]स्थाश्चन्द्रबिम्बं तदूर्ध्वतः । इति ।

नाभि शब्द से दस दल वाले मणिपूर चक्र का ग्रहण होता है। इस चक्र का भी स्वच्छन्दसंग्रह में ही इस तरह से वर्णन है—

स्वाधिष्ठान चक्र से साढे तीन अंगुल ऊपर नाभिपद्म है। दस दल वाला यह सुन्दर पद्म मणिपूर कहलाता है। इसमें [1]डामरी प्रभृति शक्तियों से घिरी हुई लाकिनी देवी का ध्यान किया जाता है।।

बारह दल वाला हृदय स्थित कमल अनाहत कहलाता है। स्वच्छन्दसंग्रह में इसका भी वर्णन किया गया है—

मणिपूर पंकज से १४ अंगुल ऊपर विद्यमान द्वादश दल कमल अनाहत कहलाता है। इसमें [2]कालरात्रि आदि शक्तियों से घिरी हुई राकिनी देवी का ध्यान किया जाता है। इसी चक्र में सूर्यबिम्ब के प्रतिनिधि नादमय उ(ओ)ड्यान पीठ की स्थिति मानी जाती है।।

कण्ठस्थित षोडश दल कमल शुद्ध अर्थात् विशुद्धि चक्र के नाम से प्रसिद्ध है। इसका भी वर्णन वहाँ इस तरह से किया गया है—

इससे एक अंगुल ऊपर षोडश दल वाला विशुद्ध चक्र है। इस चक्र के मध्य में

१. दशार–क. घ. ज. झ.। २. नाभेरष्टा–ग. घ. ज. झ. उ.। ३. भितम्–ग. घ. ने. ज. झ. उ.। ४. दूर्ध्वं–ग. ज. उ.। ५. बिम्बे–ख. झ. उ.। ६. ओडीयाना–ग.। ७. श्वरी–क. ग. ने.। ८. रान्ताश्च–क. ने.।

1. ड से फ पर्यन्त दस अक्षरों की अधिष्ठात्री डामरी आदि फट्धारी पर्यन्त देवियों का ध्यान यहाँ निहित है।

2. क से ठ पर्यन्त बारह अक्षरों की अधिष्ठात्री कालरात्रि आदि ठंकारी पर्यन्त देवियों का ध्यान यहाँ करना चाहिये।

लम्बिकाग्रे अष्टदलकमले । तदुक्तं तत्रैव—

कण्ठोर्ध्वे परमेशानि लम्बिका चतुरङ्गुले ।
तस्यामष्टदलं पद्मं [1]वशिन्यादिभिरावृतम् ।। इति ।

भ्रुवोऽन्तरे आज्ञायां द्विदलकमले । तदुक्तं तत्रैव—

आज्ञाधारं द्विपत्राब्जं हक्षद्विदलसंयुतम् ।
हंसवतीक्षमापार्श्वं[2] तयोर्मध्ये तु हाकिनी ।। इति ।

भ्रुव इत्येकवचनं भ्रूद्वयोपलक्षणम् । भ्रुवोरन्तर इत्यर्थः । इन्दौ बिन्दौ । बिन्दुतदर्धरोधिनीनादनादान्तशक्तिव्यापिकासमनोन्मनीनामुपर्युपरि रूपाण्युच्चारणकालं च वक्ष्यति । [3]महाबिन्दौ परसादाख्ये[4] देशकालरूपवर्जिते[5] ।

डाकिनी देवी और बाह्य दलों में हे परमेश्वरि ! सोलह स्वरों की अधिष्ठात्री [1]अमृता आदि शक्तियाँ विराजमान हैं । इन सबके ऊपर चन्द्रबिम्ब है ।।

लम्बिकाग्र शब्द से अष्टदल कमल का ग्रहण होता है । इसका भी वर्णन वहाँ इस तरह से मिलता है—

हे परमेशानि ! कण्ठ से चार अंगुल ऊपर लम्बिका स्थित है । इसमें [2]वशिनी आदि देवियों से आवृत अष्टदल पद्म है ।।

'भ्रुवोऽन्तरे' शब्द का अर्थ दो दल वाला आज्ञा चक्र है । इसका भी वर्णन वहीं किया गया है—

आज्ञाधार अर्थात् आज्ञा चक्र दो दल वाला है । ये दोनों दल ह और क्ष अक्षरों से सुशोभित हैं । इस चक्र में हाकिनी देवी का निवास है तथा हंसवती और क्षमा[3] नामक शक्तियाँ इसके दोनों तरफ विद्यमान हैं ।।

'भ्रुवोऽन्तरे' यहाँ एकवचन होते हुए भी वह द्विवचन का बोध कराता है । वास्तव में 'भ्रुवोरन्तरे' ऐसा पाठ होना चाहिए । यहाँ छन्द की दृष्टि से 'भ्रुवोऽन्तरे' यह पाठ कर दिया गया है । इन्दु शब्द से बिन्दु का ग्रहण होता है । बिन्दु, अर्धचन्द्र, रोधिनी, नाद, नादान्त, शक्ति, व्यापिका, समना और उन्मना की एक से दूसरे के ऊपर स्थिति, स्वरूप और उनके उच्चारण का काल अभी आगे (१।२८-३४) बताया

१. वशिका–ने. ज. उ. । २. पार्श्वद्वयं–ख. ने. ज. झ. उ. । ३. 'महाबिन्दौ' नास्ति–घ. ने. ज. उ. । ४. सादाख्यो–ख. ज. । ५. विवर्जितः–ख. ने. ज. उ. ।

1. सोलह स्वरों की अधिष्ठात्री अमृता आदि सोलह शक्तियों के नाम स्वच्छन्दसंग्रह के प्रमाण से योगिनीहृदयदीपिका (३।३४) में देखे जा सकते हैं । अनङ्गा आदि आठ देवियों को छोड़कर वरदा आदि देवियों के नाम भी यहाँ स्वच्छन्दसंग्रह के उक्त वचन के प्रमाण पर ही दिये गये हैं ।

2. नित्याषाडशिकार्णव (१।७७-७९) में वर्णित वशिनी आदि आठ देवियों का यहाँ स्मरण किया गया लगता है । ये नाम यहाँ दीपिका (३।६३) में भी देखे जा सकते हैं ।

3. दीपिका (३।३४) के उक्त उद्धरण में इन देवियों के भी नाम हैं ।



बिन्द्वाद्युन्मन्यन्ता भागाः सूक्ष्माः सूक्ष्मतराः स्वदेहचक्रविद्यानां साधारणाः । [1]कोऽर्थः ? अत्र त्रैलोक्यमोहना[2]दिबिन्द्वन्तान् स्थूलसूक्ष्मसूक्ष्मतरान् चक्रभागानकुलाद्युन्मन्यन्तेषु स्थूलसूक्ष्मसूक्ष्मतरेषु भागेषु महाबिन्दौ च विभावयेदित्यर्थः ।।२५-२६।।

पुनरपि त्रैविध्यमाह—

**पुनश्चैवं त्रिधा चक्रं तु भावयेत् ।**

एवमुक्तप्रकारेण विभावितं चक्रं पुनस्त्रिधा [3]भावयेत् ।

त्रैविध्यमाह—

**आज्ञान्तं सकलं प्रोक्तं ततः सकलनिष्कलम् ।।२७।।**
**उन्मन्यन्तं परे स्थाने निष्कलं च त्रिधा स्थितम् ।**

आज्ञान्तम् अकुलाद्याज्ञापर्यन्तं चतुरस्रादित्रिकोणान्तं चक्राष्टकं स्थूलं भावयेत् । तद्भावनं सकलम् । ततो बिन्दुमारभ्य उन्मन्यन्तं [4]चक्रसूक्ष्मसूक्ष्मतरभागान्

जायगा । महाबिन्दु से देश, काल और रूप से रहित परसादाख्य तत्त्व का ग्रहण होता है । बिन्दु से लेकर उन्मना पर्यन्त भाग सूक्ष्म से सूक्ष्मतर होते जाते हैं और इनकी स्थिति साधक के शरीर में, श्रीचक्र में और श्रीविद्या में भी एक जैसी है । इसका अभिप्राय यह है कि त्रैलोक्यमोहन चक्र से लेकर बिन्दु पर्यन्त चक्रों के स्थूल, सूक्ष्म और सूक्ष्मतर भागों की अकुल से लेकर उन्मनी पर्यन्त सूक्ष्म और सूक्ष्मतर भागों में तथा महाबिन्दु में भावना करनी चाहिये ।।२५-२६।।

इस चक्र की पुनः त्रिविध भावना का उपदेश करते हैं—

इस चक्र की पुनः त्रिविध भावना करनी चाहिये ।

उक्त (१।२५-२६) प्रकार से विभावित चक्र को पुनः तीन तरह से भावना करनी चाहिये ।

इस त्रिविधता का ही वर्णन आगे किया जाता है—

आज्ञा पर्यन्त चक्र की सकल रूप में, उन्मनी पर्यन्त चक्र की सकल-निष्कल रूप में और परस्थान (महाबिन्दु) की निष्कल रूप में, इस तरह से इस श्रीचक्र की पुनः त्रिविध भावना करनी चाहिये ।।२७।।

अकुल से आज्ञा पर्यन्त [1]आठ स्थानों में चतुरस्र से त्रिकोण पर्यन्त आठ चक्रों की स्थूल रूप में भावना करनी चाहिये । इसको सकल उपासना कहते हैं । तब बिन्दु से

१. 'कोऽर्थः' नास्ति–ख. ग. घ. ज. झ. उ. । २. नाद्युन्मन्यन्तान्–ख. ग. ने. ज. झ. उ. । ३. विभाव–क. झ. उ. । ४. सूक्ष्मसूक्ष्मतरचक्रभागान्–क. ग. ।

1. पृ० ३६ की टिप्पणी २ देखिये । तदनुसार अकुल से आज्ञा पर्यन्त नौ चक्रों में चतुरस्र से बिन्दु पर्यन्त नौ चक्रों की भावना करनी चाहिये ।

भावयेत् । तद्भावनं सकलनिष्कलम् । [1]परे स्थाने महाबिन्दौ शुद्धशून्यसंविदं भावयेत् । तद्भावनं निष्कलम् । [2]एवं त्रिधा स्थितम् । अकुलाद्याज्ञान्तास्तन्त्रान्तरेषु विस्तरेणोक्ताः, अतो नात्रोक्ताः ॥२७॥

बैन्दवाद्युन्मन्यन्तानां स्वरूप[3]मुच्चारणकालं स्थानं चाह "दीपाकारः" इत्यादिना "मनोन्मनी" इत्यन्तेन (श्लो० २८–३४)—

**दीपाकारोऽर्धमात्रश्च ललाटे वृत्त इष्यते ॥२८॥**

दीपाकारः, दीपस्य यादृशं भासनं तादृशमस्येत्यर्थः । अर्धमात्रः । ह्रस्वस्योच्चारणकालो मात्रेत्युच्यते । मात्राया अर्धमुच्चारणकालो यस्य सोऽर्धमात्रः । ललाटे वृत्त इष्यते । वर्तुलसंनिवेशो ललाटे भ्रुवोरुपरिभागे । दीपाकारोऽर्धमात्रोच्चारणकालो वृत्तसंनिवेशो बिन्दुरित्यर्थः । बिन्द्वादीनां तु विस्तारः स्वच्छन्दसंग्रहे प्रपञ्चितः । तत्र बिन्दोर्यथा—

बिन्द्वावरणमूर्ध्वतः ।
सूर्यकोटिप्रतीकाशमतिदीप्तं महद्गुणम् ॥
तन्मध्ये दशकोटीनां संख्यायोजनपङ्कजम् ।
तत्कर्णिकायामासीनः शान्त्यतीतेश्वरः प्रभुः ॥
पञ्चवक्त्रो दशभुजो विद्युत्पुञ्जनिभाकृतिः ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिरनुक्रमात् ॥
परिवार्य स्थिताश्चैताः शान्त्यतीतस्य सुन्दरि ।
वामभागे समासीना शान्त्यतीता मनोन्मनी ॥
पञ्चवक्त्रधराः सर्वा दशबाह्विन्दुभूषणाः ।
बिन्दुतत्त्वं समाख्यातं कोट्यर्बुदशतैर्वृतम् ॥इति ॥२८॥

**अर्धचन्द्रस्तथाकारः पादमात्रस्तदूर्ध्वके[1] ।**
**ज्योत्स्नाकारा त[2]दष्टांशा रोधिनी त्र्यस्रविग्रहा ॥२९॥**

---

लेकर उन्मना पर्यन्त स्थानों में चक्र के सूक्ष्म से सूक्ष्मतर भागों की भावना करनी चाहिये । यह भावना सकल-निष्कल कहलाती है । परम स्थान महाबिन्दु में शुद्ध शून्य संवित्ति की भावना करनी चाहिये । इस भावना को निष्कल कहते हैं । इस तरह से इन तीन भावनाओं के आधार पर चक्र की त्रिविध स्थिति मानी जाती है । अकुल से आज्ञा पर्यन्त चक्रों का अन्य तन्त्रों में [1]विस्तार से वर्णन मिलता है, अतः यहाँ (योगिनीहृदय में) उनका वर्णन नहीं किया गया है ॥२७॥

अब बिन्दु से उन्मना पर्यन्त नाद कलाओं का स्वरूप, उच्चारण काल तथा स्थान का वर्णन २८ से ३४ पर्यन्त श्लोकों में किया जा रहा है—

**बिन्दु का स्वरूप दीपक सदृश भासमान वृत्ताकार है । उच्चारण का काल अर्धमात्रा और स्थान इसका ललाट है ॥२८॥**

दीपाकार का अर्थ है दीपक के सदृश भासमान । ह्रस्व स्वर के उच्चारण में जो समय लगता है, उसको मात्रा कहते हैं । इस बिन्दु के उच्चारण का काल उसका आधा है । दोनों भौंहों के ऊपर ललाट के बीच में गोल आकार वाला यह बिन्दु स्थित है । इसका आशय यह हुआ कि यह बिन्दु दीपक के सदृश उज्ज्वल तथा गोल आकार वाला है, इसके उच्चारण में मात्रा के उच्चारण का आधा समय लगता है और इसकी स्थिति ललाट में है । स्वच्छन्दसंग्रह में बिन्दु प्रभृति का विस्तार से वर्णन किया गया है । वहाँ बिन्दु का वर्णन इस तरह से किया गया है—

इसके ऊपर बिन्दु का आवरण है । यह करोड़ों सूर्यों के समान अत्यन्त उज्ज्वल बहुत बड़ा स्थान है । इसके बीच में दस करोड़ योजन विस्तार वाला पंकज है । इस पद्म की कर्णिका में भगवान् शान्त्यतीतेश्वर विराजमान हैं । इनके पाँच मुँह और दस भुजाएँ हैं । इनका स्वरूप विद्युत्पुंज के समान है । निवृत्ति, प्रतिष्ठा, विद्या और शान्ति नाम की चार शक्तियाँ इनको घेर कर बैठी हुई हैं और इनके वामभाग में मन की अगोचर शान्त्यतीता शक्ति विराजमान है । ये सभी शक्तियाँ पाँच मुँह और दस भुजाओं वाली हैं और इनके ललाट पर चन्द्रकला शोभित है । इस तरह से करोड़ों-अरबों योजन विस्तार वाला यह बिन्दु नाम का आवरण स्थित है । इसी को बिन्दु तत्त्व कहा जाता है ॥२८॥

अर्धचन्द्र भी दीपक के समान उज्ज्वल आकृति वाला है । मात्रा का चौथा भाग इसके उच्चारण का काल है । बिन्दु के ऊपर इसका स्थान है । रोधिनी का आकार त्रिकोणमय है और चांदनी के समान चमकता है । इसका उच्चारण काल मात्रा का आठवां भाग है ॥ २९ ॥

---

१. तत्रानुत्पन्ना निष्पन्दा वाक् शून्यसंविदुत्पत्त्यवस्था सूक्ष्मा मूलाधारात् प्रथममुदिते परापरे स्थाने–ग. ज. झ. उ. । २. 'एवं' नास्ति–ख. ग. । ३. मुच्चारकालं चाह–ख. ग. घ. उ. ।

1. योगिनीहृदयदीपिका में उद्धृत स्वच्छन्दसंग्रह के वचनों में यह विषय विस्तार से वर्णित है । दीपिकाकार ने योगिनीहृदय वर्णित नौ चक्रों से संबद्ध वचन ही प्रायः उद्धृत किये हैं । दीपिका में उद्धृत उक्त ग्रन्थ के उद्धरणों के अनुसार उसमें कुल और अकुल नामक दो सहस्रदल कमलों के बीज में ३० आधार पद्मों का वर्णन किया गया है । यह वर्णन अन्यत्र देखने को नहीं मिलता । यह महत्त्वपूर्ण ग्रन्थ आज अनुपलब्ध है । इसकी खोज होनी चाहिये ।



१. र्ध्वतः–ग. घ. ने. छ. ज. झ. उ. । २. तथाष्टांशा–ख. ग. च. छ. ज. झ. उ. ।

अर्धचन्द्रः बिन्दोरर्धभागः, तथाकारः दीपाकार एव । पादमात्रः मात्राकालस्य चतुर्थभागोच्चारणकाल इत्यर्थः । तदूर्ध्वके बिन्दोरूर्ध्वभागे । बिन्दूपरिदेशे पादमात्रोच्चारणकालो दीपाकारोऽर्धचन्द्र इत्यर्थः । ज्योत्स्नाकारा चन्द्रिकासमकान्तिः, [1]तदष्टांशा मात्राष्टांशोच्चारणकाला, त्र्यस्रविग्रहा त्रिकोणाकारा रोधिनी । द्वयोरपि स्वच्छन्दसंग्रहे प्रपञ्चो यथा—

अर्धचन्द्रस्तदूर्ध्वे तु रोधिनी तस्य चोपरि ।
ज्योत्स्ना ज्योत्स्नावती कान्तिः सुप्रभा विमलापि च ॥
अर्धचन्द्र[2]स्थिता ह्येताः कलाः पञ्च प्रकीर्तिताः ।
रुन्धिनी रोधिनी रोधा ज्ञानरोधा तमोपहा ॥
निरोधिकाकलाः पञ्च कथितास्तव सुन्दरि ।
ब्रह्मादिपरमेशानां परप्राप्तिनिरोधनात् ॥
निरोधिकेति सा प्रोक्ता तस्या भेदाद् वरानने ।
परसादाख्यसम्प्राप्तिः .... .... ॥इति॥२९॥

**बिन्दुद्वयान्तरे दण्डः शेवरूपो मणिप्रभः ।**
**कलांशो द्विगुणांशश्च नादान्तो विद्युदुज्ज्वलः ॥३०॥**

अर्धचन्द्र बिन्दु के आधे भाग से बनता है । यह भी दीपक के समान प्रकाशमय आकृति वाला है । पादमात्र का अर्थ यह है कि इसके उच्चारण में एक मात्रा का चौथा भाग समय लगता है । बिन्दु के ऊपर यह स्थित है । बिन्दु के ऊपर के भाग में स्थित, चौथाई मात्रा उच्चारण काल वाला और दीपक के समान उज्ज्वल कान्ति वाला अर्धचन्द्र कहलाता है । रोधिनी चन्द्रिका के समान कान्ति वाली और त्रिकोण सदृश आकृति वाली है । इसका उच्चारण काल मात्रा काल का आठवां भाग है । अर्धचन्द्र और रोधिनी का स्वच्छन्दसंग्रह में इस तरह से विस्तार किया गया है —

बिन्दु के ऊपर अर्धचन्द्र और अर्धचन्द्र के ऊपर रोधिनी स्थित है । ज्योत्स्ना, ज्योत्स्नावती, कान्ति, सुप्रभा और विमला नाम की पांच कलाएँ निरोधिका में स्थित हैं । हे सुन्दरि ! यह सब मैंने तुमको सुनाया है । यह निरोधिका इस लिये कहलाती है कि ब्रह्मा प्रभृति श्रेष्ठ देवताओं को भी यह परतत्त्व तक पहुँचने से रोक देती है । इस निरोधिका शक्ति का भेदन करने के उपरान्त ही परसादाख्य तत्त्व की प्राप्ति होती है ॥ २९ ॥

दो बिन्दुओं के बीच में एक सीधी रेखा— यही नाद का आकार है । शेव-सदृश इस नाद की कान्ति मणि के समान उज्ज्वल है । इसका उच्चारण काल

१. अष्टांशा–ख. ने. ज. झ., अष्टांशः अष्टांशोच्चारणकालः–ग. । २. न्द्रोदिता–ख., न्द्रोत्थिता–झ , न्द्रे स्थिता–ग. उ. ।



**हलाकारस्तु सव्यस्थबिन्दुयुक्तो विराजते ।**

बिन्दुद्वयमध्यगत ऋजुरेखाकारः शेवरूपः, मुष्कद्वयमध्यगता शिरा शेव इत्युच्यते, तत्तुल्यरूपः । मणिप्रभः पद्मरागसवर्णवर्णः । कलांशः, कलाः षोडशमात्राः, षोडशांशोच्चारणकाल इत्यर्थः । स पुनः कलांशो नादस्तन्त्रेणोच्यते । "[1]कलो नादस्तु गम्भीरे ध्वनौ तु मधुरास्फुटे" इत्यमरः । मधुरास्फुटो ध्वनिर्नादः । नादप्रपञ्चः स्वच्छन्दसंग्रहे यथा—

रोधिन्याख्यं यदुक्तं ते नादस्तस्योर्ध्वसंस्थितः ।
पद्मकिञ्जल्कसंकाशः कोटिसूर्यसमप्रभः ॥
पुरैः परिवृतोऽसंख्यैर्मध्ये पञ्चकलावृतः ।
इन्धिका दीपिका चैव [2]रोचिका मोचिका तथा ॥
ऊर्ध्वगा मध्यगा तासां पञ्चमो परमा कला ।
चन्द्रकोटिसमप्रख्यं तन्मध्येऽर्बुदयोजनम् ॥

मात्रा का सोलहवां भाग है । नादान्त का उच्चारण काल मात्रा का ३२ वां भाग है । यह बिजली के समान चमकीला है और इसका आकार हल के सदृश है । इसके दक्षिण भाग में एक बिन्दु भी बना रहता है ॥ ३० ॥

दो बिन्दुओं के बीच में एक सीधी रेखा खींच देने पर उसका आकार शेव के समान हो जाता है । दो अण्डकोशों के बीच की सीवन को शेव कहते हैं । नाद की आकृति ऐसी ही होती है । पद्मराग मणि के समान इसकी कान्ति है । मात्रा का कलांश अर्थात् सोलहवां भाग इस कलांश ( नाद ) का उच्चारण काल है । कलांश पद की दो बार आवृत्ति करने से यह अर्थ निकलता है । 'कलो नादस्तु' इत्यादि अमरकोश के वचन के अनुसार मधुर और अस्फुट ध्वनि को नाद कहते हैं । इस नाद का परिचय भी स्वच्छन्दसंग्रह में दिया गया है—

अभी तुम्हें रोधिनी का स्वरूप समझाया है । इसके ऊपर नाद की स्थिति है । पद्म की केसर के समान इसका वर्ण और करोड़ों सूर्यों के समान इसकी कान्ति है । यह असंख्य भुवनों से आवृत है और उन सबके बीच में पांच कलाएँ हैं । इनके नाम इन्धिका, दीपिका, रोचिका, मोचिका और ऊर्ध्वगा हैं । पांचवीं सर्वश्रेष्ठ कला मध्यभाग में विराजमान है । इन सब इन्धिका प्रभृति देवियों से घिरे हुए करोड़ों चन्द्र की समान कान्ति वाले एक अर्बुद ( अरब ) योजन विस्तार वाले इस पद्म के बीच में बैठे हुए, अरबों

१. 'कलो नादो ध्वनौ तु मधुरास्फुटे कलः–ख. ग. ज. झ. उ., 'ध्वनौ तु मधुरास्फुटे । कलो मन्द्रस्तु गम्भीरे' (१।७।२) इति तु मूलस्थः पाठः । २. रेचिका–क. ख. ने. ।

पद्ममध्ये समासीनमोश्वरं चोर्ध्वगामिनम् ।
चन्द्रायुतप्रतीकाशं पञ्चवक्त्रं त्रिलोचनम् ॥
[1]इन्धिकाद्यैर्वृतं देवं शूलपाणिं जटाधरम् ।
तस्योत्सङ्गगतामूर्ध्वगामिनीं परमां शिवाम् ॥
ध्यायेत् ॥इति ।

विद्युदुज्ज्वलः तडित्सदृशकान्तिः । हलाकारः लाङ्गलसदृशरूपः । सव्यस्थ-बिन्दुयुक्तः बिन्दुद्वयमध्ये दक्षिणभागस्थितबिन्दुयुक्तः । द्विगुणांशश्च पूर्वोक्तषोडशांशानां द्विगुणांशो द्वात्रिंशत्तमो भागः । कोऽर्थः ? मात्राद्वात्रिंशत्तमांशोच्चारण-कालो हलाकारादिविशेषणविशेषितो नादान्त इत्यर्थः । नादस्यान्तो लयो भवति यत्र ब्रह्मरन्ध्रे, तस्य प्रपञ्चः स्वच्छन्दसंग्रहे यथा—

हलाकारस्तु नादान्तो भित्वा सर्वमिदं जगत् ।
अधःशक्त्या विनिर्भिद्य ऊर्ध्वशक्त्यवसानकः ॥
नाड्यां ब्रह्मबिले लीनस्त्वव्यक्तध्वनिलक्षणः ।
अतो ब्रह्मबिलं ज्ञेयं रुद्रकोट्यर्बुदैर्युतम्[2] ॥
तत्र [3]ब्रह्मशिवो ज्ञेयः शशाङ्कशतसन्निभः ।
दशबाहुस्त्रिनेत्रश्च पञ्चवक्त्रेन्दुशेखरः ॥

---

चन्द्रों की समान कान्ति वाले, पांच मुँह और तीन नेत्र वाले, त्रिशूल हाथ में लिये जटाजूट-धारी ऊर्ध्वगामी भगवान् शिव का और उनके उत्संग ( गोद ) में बैठी ऊर्ध्वगामिनी भगवती भवानी का ध्यान करना चाहिए ॥

नादान्त बिजली के समान चमक वाला और हल के समान आकार वाला है । दो बिन्दुओं में से एक बिन्दु इसकी दक्षिण की ओर रहता है । इसका उच्चारण काल सोलह का दुगुना, अर्थात् मात्रा का ३२ वां भाग होता है । इसका अभिप्राय यह है कि नादान्त का उच्चारण काल मात्रा का ३२ वां भाग है और इसका आकार हलाकार आदि विशे-षताओं से युक्त है । नादान्त का स्थान ब्रह्मरन्ध्र में है, क्योंकि यहीं नाद का अन्त (लय) होता है । स्वच्छन्दसंग्रह में नादान्त का प्रपंच ( विस्तृत वर्णन ) इस तरह से किया गया है—

नादान्त का आकार हल के सदृश है, अतः इस सारे जगत् को भेद कर, अधःशक्ति से लेकर ऊर्ध्वशक्ति पर्यन्त समस्त शक्ति चक्रों को भी भेद कर ब्रह्मबिल ( ब्रह्मरन्ध्र ) में स्थित नाडी ( सुषुम्ना ) में लीन हो जाता है । उस समय अव्यक्त मधुर ध्वनि के रूप में मात्र योगीजन इसका अनुभव कर सकते हैं । यह ब्रह्मबिल ११ करोड़ अरब योजन विस्तार वाला है । यहां ब्रह्म रूपी शिव निवास करते हैं । सैकड़ों चन्द्रों के सदृश इनकी

१. इन्दिरा–ग. ज. झ. उ. । २. वृतम्–क. ग. । ३. ब्रह्मा–ग. झ. उ. ।



ब्रह्माणी त्वपरा शक्तिर्ब्रह्मणोत्सङ्गगामिनी ।
द्वारं सा मोक्षमार्गस्य रोधयित्वा व्यवस्थिता ॥इति॥३०॥

**शक्तिर्वामस्थबिन्दूद्यत्स्थि[1]राकारा तथा पुनः ॥३१॥**
**व्यापिका बिन्दुविलसत्त्रिकोणाकारतां गता ।**

पुनःशब्देन पूर्वेभ्यो विशेषो द्योत्यते । पूर्वेषां बिन्द्वाद्यंशानां स्वरूपवर्णमात्रा-कालांशा[2] अभिकल्पिताः । शक्तिमारभ्य समनान्तानामंशानां स्वरूपवर्णमात्रा[3]-कालाः पश्चाद् वक्ष्यन्त इत्यर्थः । शक्तिर्बिन्दुद्वयमध्ये वामभागस्थबिन्दूद्य[4]त्स्थिरा-कारा । शक्तिप्रपञ्चः स्वच्छन्दसंग्रहे यथा—

शक्तितत्त्वं समाख्यातं भुवनै[5]रावृतं महत् ।
आधारं भुवनानां च प्रवक्ष्यामि समासतः ॥
सूक्ष्मा चैव सुसूक्ष्मा च तथा चैवामृता मृता ।
चतुर्दिक्षु स्थितास्तासां मध्यस्था व्यापिनी [6]स्मृता ॥

---

कान्ति है । ये दश भुजा वाले, तीन नेत्र वाले, पांच मुंह वाले और इन्दुशेखर हैं । इनकी गोद में ब्रह्माणी नाम की शक्ति विराजमान है । यह शक्ति मोक्ष के मार्ग को रोक कर बैठी रहती है ॥ ३० ॥

शक्ति का आकार सीधी रेखा के वाम भाग में बिन्दु को रखने से बनता है । व्यापिका का आकार त्रिकोणमय है । इस त्रिकोण के नीचे एक बिन्दु शोभित है ॥ ३१ ॥

श्लोक में विद्यमान पुनः शब्द एक विशेषता का द्योतक है । पूर्व वर्णित बिन्दु प्रभृति का स्वरूप, वर्ण और मात्राकाल भी साथ में ही बताया गया है । अब शक्ति से लेकर समना पर्यन्त अंशों का [1]स्वरूप, वर्ण और मात्राकाल बाद में बताया जायगा । दो बिन्दुओं में से बाम भाग में स्थित बिन्दु से एक स्थिर रेखा खींच देने पर शक्ति का आकार बनता है । स्वच्छन्दसंग्रह में यह इस तरह से वर्णित है—

शक्तितत्त्व अनेक महान् भुवनों से आवृत है । यही सारे भुवनों का आधार है । इसका मैं संक्षेप में वर्णन करूँगा । चार दिशाओं में स्थित सूक्ष्मा, सुसूक्ष्मा, अमृता और मृता नाम की चार शक्तियों के बीच में व्यापिनी विराजमान है । यह पांचवीं शक्ति

१. शिवा–ग. ने. छ. झ. उ., शिवाकारतया–ने. ज. । २. कलांशाः कल्पिताः–ख. ग. ने. ज. झ. उ. । ३. कलाः–क. ख. ग. ने. ज. झ. उ. । ४. शिवा–ज. झ. उ. । ५. राश्रितम्–ख. ग. ने. ज. झ. उ. । ६. स्थिता–ख. ग. ।

1. बिन्दु से उन्मना पर्यन्त कलाओं के स्वरूप को जानने के लिये भास्करराय के वरिवस्यारहस्य के अड्यार लाइब्रेरी, मद्रास से प्रकाशित संस्करण के अन्त में दिया गया चित्र देखना चाहिये ।

शिखायां महाशून्ये व्यवस्थिते सर्वप्राणिष्वात्मनि प्रकाशलक्षणे कामाग्नौ "आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन" (न्या० भा० १।१।४) इति तन्त्रान्तरोक्तरीत्या बहिरर्थेषु प्रसृतचिन्मरीचिरूपाक्षवृत्तिलक्षणं हविस्तेनैव मार्गेणान्तर्मुखतया मनसा सह[1] जुहुयादित्यर्थः । तदुक्तं विज्ञानभैरवभट्टारकैः—

महाशून्यालये वह्नौ भूताक्षविषयादिकम् ।
[2]हूयते मनसा सार्धं स[3] होमश्चेतनास्रुचा ॥ इति ।
(श्लो० १४६)

[4]अयमेवान्तरो होमः । तदुक्तं पद्धतिषु—

धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा ।
सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥ इति ॥१०६॥

है"[1] । इसका अभिप्राय यह है कि कुण्डलिनी की शिखा में, महाशून्य में विराजमान सभी प्राणियों में स्वात्मस्वरूप महाप्रकाश (कामात्मक) वह्नि में बाह्य विषयों के रूप में प्रसृत समस्त इन्द्रियों की वृत्तियों की आहुति दे दी जाती है । "आत्मा मन से, मन इन्द्रियों से और इन्द्रियाँ अर्थ से संयुक्त होती हैं" न्यायभाष्य की इस पद्धति से बाह्य विषयों की तरफ आकृष्ट चिन्मरीचिस्वरूप इन्द्रियों की वृत्तियों को ही आहुति माना गया है । यहाँ आहुति का तात्पर्य जिस पद्धति से ये बाहर आईं, उसी पद्धति से इनको अन्तर्मुख बनाकर उनको मन के साथ अपनी आत्मा को समर्पित कर देना है । विज्ञानभैरव भट्टारक का इस विषय में कहना है—

महाशून्य स्थान में विराजमान चित्स्वरूपिणी वह्नि में अपनी चेतना की स्रुचा बनाकर मन के साथ पाँच महाभूतों, बाह्य इन्द्रियों और उनके विषयों की जो आहुति दी जाती है, वही वास्तविक होम है ॥

इसी को आन्तर होम कहा जाता है, जैसा कि [2]पद्धतियों में बताया गया है—

धर्म और अधर्म रूपी आहुति से प्रज्वलित आत्मचिदग्नि में मन रूपी स्रुचा की सहायता से मैं अपने सुषुम्ना मार्ग को खोल कर अपनी इन्द्रियों की वृत्तियों की नित्य आहुति देता हूँ ॥१०६॥

१. 'सह' नास्ति-ख. ने. ज. झ. उ. । २. वातेन-ख. ने. ज. उ. । ३. महामहिमशालिनि-ख. ने. उ. । ४. महामहिमशाली चाय-झ. ।

1. विज्ञानभैरव का पूरा श्लोक और उसकी व्याख्या हमारे भाषानुवाद में देखी जा सकती है ।

2. यह श्लोक अनेक पद्धति-ग्रन्थों तथा तन्त्र-ग्रन्थों में भी मिलता है ।



आन्तरामेव पूर्णाहुतिमाह—

अहन्तेदन्तयोरैक्यमुन्मन्यां[1] स्रुचि कल्पितम् ।
मथनोद्रेकसम्भूतं वस्तुरूपं महाहविः ॥१०७॥
हुत्वा हुत्वा स्वयं चैव[2] सहजानन्दविग्रहः ।

[3]प्रदानैस्तर्पणैः सम्यग्विशुद्धैरमृतात्मभिः ।
[4]महाहन्तीकरोमीदं विश्वं हव्यवपुर्धरम्[5] ॥ (सु० वा० ३९)

इत्यभियुक्तवचनोक्तरीत्या अहन्तेदन्तयोरैक्यम्, अहन्ता प्रमाता, इदन्ता प्रमेयम्, तयोरैक्यं प्रमाणम्, तत्त्रितयसामरस्यात्मकम्[6] ।

विश्वक्षिप्तपद[7]प्रमेयसुभगां ब्राह्मीं महावाग्भवे[8]
विश्वोत्तीर्णमहा[9]प्रकाशवपुषं शक्तिं च[10] नैसर्गिकीम् ।

अब आन्तर पूर्णाहुति का विवरण देते हैं—

मन्त्ररूपी अरणि के मथन के उद्रेक से उत्पन्न प्रमाता, प्रमेय और प्रमाण की सामरस्य वस्तुरूप महाहवि को उन्मनी नाम की स्रुचा में रखकर उसकी बार-बार आहुति दे और इस तरह से साधक सहजानन्द से परिपूर्ण हो जाय ॥१०७-१०८॥

सुभगोदयवासना में शिवानन्द मुनि ने कहा है—

भलीभाँति शोधित होने से अमृतस्वरूप वस्तुओं के अर्पण और तर्पण से, हवि का स्वरूप धारण करने वाले इस सारे विश्व को मैं अपनी महाहन्ता में विलीन कर दे रहा हूँ ॥

इसके अनुसार अहन्ता का अर्थ प्रमाता, इदन्ता का अर्थ प्रमेय और इनके ऐक्य का नाम प्रमाण होगा । इन तीनों की सामरस्य स्थिति का वर्णन किसी प्रामाणिक व्यक्ति ने इस तरह से किया है—

महावाग्भव त्रिकोण में सृष्टिकर्त्री ब्राह्मी शक्ति के रूप में इस विश्वरूपी प्रमेय पदवी में प्रविष्ट होने वाली, विश्वोत्तीर्ण अवस्था में महाप्रकाश और उसकी स्वाभाविक विमर्श शक्ति के रूप में प्रमाता पदवी में स्थित रहने वाली, प्रमाण पदवी की तरफ बढ़ने पर

१. मनीस्रु-ख. ने. च. छ. ज. झ. । २. चैव-च. छ. ज. झ. उ. । ३. नैदानैरिति सार्वत्रिको दी० पाठः । ४. मदहन्तां-क. ग., समाहन्तां-ख. ने. ज. झ. उ. । ५. पुरःसरम्-क. ग. । ६. स्वरूपम्-ख. ने. ज. झ. उ. । ७. वर-ज. झ., लसत्-ख., बसत्-ने. ब. उ. । ८. वैभवैः-ख. ब. उ., भूसरैः-ज., भूभवैः-झ. । ९. प्रमातृबपुषः-ख. ने. ज. झ. ब. उ. । १०. तु-ख. ने. ज. झ. ब. उ. ।

प्रामाण्य[1]प्रवणत्रिशक्तिखचिता[2]मध्युष्टचातुर्दशीं
[3]संवित्त्यर्कसमिद्धवस्तुभरितो मथ्नामि [4]मन्त्रारणिम् ॥

इत्यभियुक्तवचनोक्तरीत्या मन्त्रारणिमथनोद्रेकसम्भूतं तत्त्रितयसमष्टिरूपम्[5]। वस्तुरूपम्, वस्तु [6]द्रव्यम्, तद्रूपम्। तदुक्तं मुख्याम्नायक्रमे—"स्वीकुर्यात् सततं वस्तु यदानन्दसुखं भवेत्" इति। महाहविः। यस्मिन् हुते स्वप्रमेयलक्षणे हविषि प्रमातृलक्षणं ज्योति[7]रनवरतं प्रज्वलति, तन्महाहविः। पूर्णाहुतिहोमे[8] उन्मन्यां स्रुचि कल्पितम्। उन्मनी नाम[9] पूर्वोक्त(१।३४)लक्षणा, सा स्रुगिच्युते, तस्यां स्रुचि, तन्मयेनामृतेनापूर्य पूर्णाहुतिं जुहुयात्। एवंरूपं हविर्हुत्वा।

आनन्दं ब्रह्मणो रूपं तच्च देहे[10] प्रतिष्ठितम्।
तस्याभिव्यञ्जकं द्रव्यं[11] योगिभिस्तेन पीयते ॥

---

तीन शक्तियों का स्वरूप धारण करने वाली और फिर इन सबकी सामरस्यमयी तुरीया स्थिति में रहने वाली मन्त्ररूपी अरणि को मैं ज्ञानरूपी सूर्य के प्रकाश से परिपूर्ण हो मथता हूँ ॥

इसके अनुसार मन्त्र रूपी अरणि के मथन की चरम स्थिति में प्रमाता, प्रमेय और प्रमाण की समरस दशा का उन्मीलन होता है। मुख्याम्नायक्रम में इसी के लिये कहा गया है—"साधक उसी वस्तु का ग्रहण करे, जिससे ब्रह्मानन्द सहोदर सुख की उत्पत्ति हो"। इसी को महाहवि कहते हैं। प्रमेय स्वरूप हवि की आहुति दे देने पर प्रमातृ स्वरूप ज्योति ही निरन्तर जलती रहती है, अतः इसी को महाहवि कहा जाता है। यह पूर्णाहुति होम इसी आहुति से सम्पन्न होता है। इस आहुति को उन्मनी रूपी स्रुचा में रखकर दिया जाता है। उन्मनी का स्वरूप पहले (१।३४) बताया जा चुका है। इस उन्मनी रूप स्रुचा में ऊपर बताये गये सामरस्य समुद्भूत अमृत को भर कर पूर्णाहुति दे। इसकी आहुति देने के बाद—

आनन्द ब्रह्म का ही स्वरूप है। यह आनन्द इसी शरीर में छिपा हुआ है। इसका अभिव्यंजक द्रव्य (मद्य) है। इसी लिये योगी इसका पान करते हैं ॥

---

१. प्रणयेन श–क. ने. ज. झ. ब. उ.। २. तां मध्ये तु–क. ग., मध्युष्टचान्तर्दिशो–ज.। ३. संवित्पाकसुसिद्ध–ब. उ.। ४. तन्त्रा–क. ग. झ. उ.। ५. 'रूपम्' नास्ति–ख. ज.। ६. मद्यम्–ख. ने. ज. झ. उ.। ७. निरन्तरं–ख. ने. ज. झ. उ.। ८. होमः–क. ग. ज.। ९. नाम समनोर्ध्वे निरस्तकालकलाक्रियादिका पू–क. ग.। १०. मोक्षे–ख. ने. ज. झ. उ.। ११. मद्यं–ने. ज. उ., हव्यं–ज.।



इति प्रामाणिकवचनोक्तरीत्या यावदानन्दाविर्भावो भवति [1]तावदिति वीप्सार्थः। स्वयं चैव सहजानन्दविग्रहः। मद्याद्यनुभवेन कृत्रिमानन्दजृम्भणान्महानन्दानुसन्धानात् तन्मयो भवेदिति। तदुक्तं विज्ञानभैरवभट्टारकैः—

जग्धिपानकृतोल्लासरसानन्दविजृम्भणात्।
भावयेद् भरितावस्थां महानन्दस्ततो भवेत् ॥ इति।

(वि० भै०, श्लो ७१)

कोऽर्थः? मन्त्रारणिमथनसंभूतमिदन्ताहन्तासामरस्य[2]मयवस्तुरूपघृतपूर्णाहुतिं बहुशो हुत्वा परिस्फुरत्परमानन्दो भवेदित्यान्तरपूर्णाहुतिः ॥१०७-१०८॥

अत एव—

प्रविष्टेऽन्तः सीधुरसे भेदनिर्हरणात्मके।
स्थैर्यमेति चमत्कारो विना विषयसंगतिम्[3] ॥

---

किसी [1]प्रामाणिक व्यक्ति के इस वचन के अनुसार जब तक आनन्द की अभिव्यक्ति न हो जाय, तब तक यह पूर्णाहुति बार-बार दी जाती है। ऐसा करने से साधक सहज आनन्द से परिपूर्ण हो जाता है। मद्य आदि के सेवन से कृत्रिम आनन्द अभिव्यक्त होता है। इसमें महानन्द का अनुसन्धान करने पर योगी महानन्द से परिपूर्ण हो जाता है। विज्ञानभैरव भट्टारक की यह उक्ति इसमें प्रमाण है—

जग्धि और पान के कारण अभिव्यक्त उल्लास, रस और आनन्द की स्थिति से साधक अपनी आत्मा को परिपूर्ण समझे। इससे उसमें ब्रह्मानन्द सहोदर महानन्द अभिव्यक्त हो उठता है ॥

इसका भाव यह है कि मन्त्रारणि का मथन करने से इदन्ता और अहन्ता के सामरस्य स्वरूप जिस द्रव्य की उत्पत्ति होती है, उसी से यह पूर्णाहुति बार-बार दी जाती है। योगी ऐसा करते समय जब परमानन्द से परिपूर्ण हो जाता है, तो समझना चाहिये कि यह आन्तर पूर्णाहुति परिपूर्ण हो गई ॥१०७-१०८॥

इसी लिये—"भेददृष्टि को दूर भगा देने वाले सीधुरस के भीतर प्रवेश करने के साथ ही विषयों का सम्पर्क हुए बिना ही चमत्कार, अर्थात् सहजानन्द स्थिर हो जाता

---

१. 'तावदिति''''भवेदिति' एष पाठः केवलं झ. मातृकायां दृश्यते। २. रस्यरूपं मद्यरूपं घृत–क. ग. ने.। ३. संगमात्–ख. ने. ज. झ. उ.।

1. यह श्लोक कुलार्णवतन्त्र (५।८०) में भी मिलता है, किन्तु दीपिकाकार इसको भी प्रामाणिक वचन मानते हैं। बौद्ध तान्त्रिक विद्वान् अद्वयवज्र इसके पूर्वार्ध को वेदान्तवादी का वचन कह कर उद्धृत करते हैं। देखिये—अद्वयवज्रसंग्रह, पृ० २९, तत्त्वप्रकाश के टीकाकार कुमार (पृ० ९) भी इसको श्रुतिवचन मानते हैं।

इति क्रमोदयोक्तरीत्या [1]मनसि स्थिरीभूते बाह्यचक्रार्चनं कुर्यादित्याह—

**स्व[2]प्रथाप्रसराकारं श्रीचक्रं पूजयेत् सुधीः ॥१०८॥**

सुधीः सीधुरसपानेनानन्यविषयासक्तः [3]स्वसंविन्मात्रस्थिरमनाः। मनसि स्थिरे सति धारणा स्थिरा, तस्यां स्थिरायां "तत्र प्रत्ययैकतानता ध्यानम्" (३।२) इति योगपातञ्जलशास्त्रोक्तरीत्या[4] प्रत्ययैकतानतालक्षणं ध्यानं भवति। विना ध्यानं पूजा निष्फला भवति। अथादावमृतीकृतमासवं शिवादिभ्यो गुरुभ्यो[5] निवेद्य स्वात्माग्नौ हुत्वा प्रज्वलत्परमानन्दस्थिरधीर्भूयादित्यर्थः। [6]स्वप्रथाप्रसराकारः स्वप्रथा स्वसंवित् तस्या बहिरर्थेष्विन्द्रियद्वारा प्रसरो व्यापारः, [7]तदात्मना स्फुरणम्। ततस्तदाकारं श्रीचक्रं पूजयेत्। श्रीचक्रं[8] नाम नान्यत् किञ्चित्, अपि तु स्वसंविद्देवतायाः प्रसररूपाऽन्तःकरणचतुष्टयाव्यक्तमहदहङ्कृतितन्मात्रदशे-

---

है" क्रमोदय के इस वचन के अनुसार मन के स्थिर हो जाने पर बाह्य चक्र की पूजा करे, इस विषय का अब यहाँ वर्णन किया जा रहा है—

विद्वान् साधक मन के स्थिर हो जाने पर अपनी आन्तर संवित् के ही बाह्य आकार वाले श्रीचक्र की पूजा करे ॥१०८॥

सुधी शब्द का अर्थ यहाँ है—सीधु रस के पान से जिसका मन अन्य किसी बाहरी विषय में आसक्त नहीं है, अपने संवित्स्वरूप में जो प्रतिष्ठित हो गया है। मन के स्थिर होने से धारणा स्थिर हो जाती है और धारणा के स्थिर होने पर ध्यान भी स्थिर हो जाता है। पातंजल योगसूत्र में प्रत्यय की एकतानता का नाम ध्यान बताया गया है। बिना ध्यान के पूजा निष्फल होती है। इसी लिये पहले यहाँ अमृतीकृत आसव को शिव (भैरव), गुरु आदि को निवेदित कर अपनी कामाग्नि में भी उसकी आहुति दी जाती है। इससे परमानन्द की अभिव्यक्ति होती है और उसी में साधक का मन स्थिर हो जाता है। स्वप्रथा का अर्थ है अपनी संवित्, उसका इन्द्रिय मार्ग से जब बाहरी अर्थों में प्रसार होता है, व्यापार चलता है, तो विश्वाकार में यह संवित् बदल जाती है। श्रीचक्र इसी का परिणाम है। श्रीचक्र और कुछ नहीं है, किन्तु अपनी संविद् देवता ही बाहर फैलते समय अन्तःकरण-चतुष्टय, अव्यक्त, महत्, अहङ्कार, तन्मात्रा, ज्ञानेन्द्रिय, कर्मेन्द्रिय, इनकी वृत्तिय

---

१. मनःस्थैर्यं जायते चेच्चक्रा–ख. ने. ज. उ.। २. स्वप्रधा–क. ग.। ३. स्वयं चिन्मात्र–ख. ने. ज. उ.। ४. 'रीत्या' नास्ति–ख. ने. ज. झ. उ.। ५. भ्यः शिवाभ्यां च–क. ख. ग.। ६. स्वप्रवा–क. ग.। ७. तत आत्मनः–ख. ने. ज. झ. उ.। ८. 'श्रीचक्रं नाम' नास्ति–ख. ज. झ. उ.।



न्द्रिय[1]तद्वृत्तितद्विषयतत्पुर्यष्टकषोडशविकारधातुप्रपञ्च एव[2] श्रीचक्रात्मना स्फुर[3]त्येतावत् ॥१०८॥

श्रीचक्रपूजामाह "गणेशम्" इत्यादिना "चक्रपूजां विधाय" (३।१६८) इत्यन्तेन—

**गणेशं दूतरीं चैव क्षेत्रेशं दूतिकां तथा।**
**बाह्यद्वारे यजेद् देवि देवीश्च स्वस्तिकादिकाः ॥१०९॥**

श्रीचक्रद्वारशाखयोर्गणेशं तच्छक्तिं दूतरीं क्षेत्रेशं बटुकाख्यं तच्छक्तिं दूतिकां च यजेत्। तदुक्तं संकेतपद्धत्याम्—

> द्वैताद्वैतमहामोहशर्वरीक्षपणक्षमः।
> भास्वानिव जयत्येको गणेशो दूतरीयुतः॥
> प्रतिभायाः परोल्लासो निशाकर इवापरः।
> दूतीयुक्तः स जयति बटुकस्ताण्डवान्वितः॥ इति।

बाह्यद्वारे श्रीचक्रद्वारबाह्यप्रदेशे, स्वस्तिकादिका[4] देवीः सरस्वतीश्रीदुर्गाभद्रकाल्यश्चतस्रः। स्वस्तिका आदिर्यासामिति समासः। स्वाहाशुभङ्करीगौरीलोक-

---

इनके विषय, पुर्यष्टक, सोलह विकार पर्यन्त इस समस्त विश्वप्रपंच का स्वरूप धारण कर कर लेती है और इसी का नाम श्रीचक्र है ॥१०८॥

अब यहाँ १०९ से १६८ पर्यन्त श्लोकों में श्रीचक्र की पूजाविधि बताई जा रही है—

हे देवि! श्रीचक्र के बाह्य द्वार पर गणेश, दूतरी, क्षेत्रेश तथा दूतिका और स्वस्तिका आदि देवियों की पूजा करे ॥१०९॥

श्रीचक्र के द्वार की दोनों तरफ गणेश और उसकी शक्ति दूतरी की तथा क्षेत्रेश (बटुक) और उसकी शक्ति दूतिका की पूजा करे। संकेतपद्धति में बताया गया है—

द्वैत और अद्वैत की महामोह रूपी रात्रि के घने अन्धकार का, अज्ञान का नाश करने में एकमात्र गणेश ही अपनी शक्ति दूतरी के साथ सूर्य के समान समर्थ हैं। उनकी जय हो। प्रतिभा का जहाँ परम उत्कर्ष हुआ है, चन्द्रमा के समान जो आलोक से परिपूर्ण हैं, ताण्डव नृत्य में रत, अपनी शक्ति दूती के साथ विराजमान बटुकभैरव की जय हो॥

श्रीचक्र के द्वार के बाहर स्वस्तिका, सरस्वती, श्री, दुर्गा और भद्रकाली तथा स्वाहा, शुभङ्करी, गौरी, लोकधात्री और वागीश्वरी इन पाँच पाँच देवियों की भगवती

---

१. 'तद्वृत्ति' नास्ति–ख. ने. ज. झ. उ.। २. 'एव' नास्ति–ख. ज. उ.। ३. रतीत्येव–ख. ज. उ., रतीति–झ.। ४. काद्या देव्यः–ख. ने. ज. झ. उ.।

धात्रीवागीश्वर्यंश्च पञ्च। एतास्ताश्च देवीर्गायिका यजेत्। तत्प्रसिद्धं पद्धतिषु ॥१०९॥

**ततश्चान्तस्त्रिकोणेऽपि गुरुपङ्क्तिं त्रिधा स्थिताम् ।**

ततस्तस्य श्रीचक्रस्य अन्तस्त्रिकोणे त्रिधा स्थितां दिव्यसिद्धमानवौघत्रयवर्तीं गुरुपङ्क्तिं शिवादिस्वगुरुपर्यन्तानां गुरूणां पङ्क्तिः परम्परा ताम्। अपिशब्दाद् यजेदित्यनुषङ्गः । गुरुपरम्परा गुरुमुखादेव ज्ञातव्या, न लोकतः । न च पुस्तके[1] लिखिता, अत्यन्तरहस्यत्वात् ॥

**तदन्तश्च महादेवीं तामावाह्य यजेत् पुनः ॥११०॥**
**महापद्मवनान्तस्थां कारणानन्दविग्रहाम् ।**
**मदङ्कोपाश्रयां[2] देवीमिच्छाकामफलप्रदाम् ॥१११॥**
**भवतीं**

तदन्तः श्रीचक्रस्य [3]मध्ये बैन्दवाख्ये चक्रे । तां महापद्मवनान्तस्थाम् "महापद्मवनान्तस्थे वाग्भवे गुरुपादुकाम्" (३।५) इत्यत्रोपपादितरूपाम्[4] । अकुलाधोमुखसहस्रदलं कमलं महापद्मवनम् । मदङ्कोपाश्रयाम् अनाश्रितस्य[1] स्वप्रकाशात्मनो ममाऽङ्कस्थाम् । कारणानन्दविग्रहाम् । कारणं नाम[2] हेतुद्रव्यम् । अत्रैव वक्ष्यति—"क्षेत्राणां पतये मह्यं बलिं कुर्वीत हेतुना" (३।१९९) इति । द्रव्यपानेन तेन य आनन्दः, स एव विग्रह आकारो यस्यास्ताम् । कोऽर्थः ? शोधितामृतीभूतद्रव्यपानपरिस्फुरत्परमानन्दमात्रशरीरामित्यर्थः । भवतीम् अनाश्रितां [मम[3] देवीं विमर्शात्मिकाम् । इच्छाकामफलप्रदाम् इच्छया यत् काम्यते फल[4] तस्य सर्वस्य दात्रीम् ।

महापद्मवनान्तस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥

इति मन्त्रेण आवाह्य यजेत् ।

ननु महापद्मवनान्तस्थामित्यनेनैवानाश्रितो देवोऽनाश्रिता देवी चाऽत्र चक्रे समावाह्य कामेश्वरीकामेश्वररूपेण पूज्याविति कथमवसीयत इति चेदुच्यते—महापद्मवनान्तस्थः सकलागमशास्त्राणां वक्ता देवोऽप्यनाश्रित एव, तच्छक्तिरनाश्रिताऽत एव । अन्यथा महापद्मवनान्तस्थां मदङ्कोपाश्रयां भवतीमिति वचनं

---

त्रिपुरसुन्दरी की गायिकाओं के रूप में पूजा करे । यह सारा विषय पद्धति-ग्रन्थों में प्रसिद्ध है ।।१०९।।

तब श्रीचक्र के मध्यत्रिकोण में त्रिधा स्थित गुरुपंक्ति की पूजा करे ।।

इसके बाद श्रीचक्र के अन्दर बीच में विद्यमान त्रिकोण में दिव्य, सिद्ध और मानवौघ के क्रम से तीन भागों में विभक्त गुरुपंक्ति की, शिव से लेकर अपने गुरु तक चली आई गुरुपरम्परा की भी पूजा करे । त्रिधा विभक्त इस गुरुपरम्परा का ज्ञान अपने गुरु के मुँह से ही प्राप्त करना चाहिये । लौकिक परम्परा से इसका ज्ञान नहीं हो सकता । यह परम्परा अत्यन्त गोपनीय होने से [1]पुस्तक में भी नहीं लिखी जाती ।।

उस त्रिकोण रूपी महापद्मवन में विराजमान, कारणानन्द शरीरवाली इच्छानुसार सभी कामनाओं को पूरा करने वाली, मेरे अंक में विराजमान महादेवी त्रिपुरसुन्दरी का आवाहन कर पूजन करे ।।११०-११२।।

'महापद्मवनान्तस्थ' पद की व्याख्या पहले (३।५) की जा चुकी है । तदनुसार श्रीचक्र के मध्य में स्थित त्रिकोणान्तर्गत बैन्दव चक्र में विद्यमान अकुल नाम का अधोमुख सहस्रदल कमल महापद्मवन कहलाता है । यह देवी उसमें विराजमान है । यह देवी अनाश्रित स्वप्रकाशमय शिवस्वरूप की, अर्थात् मेरी, गोद में बैठी हुई है । कारण हेतु-द्रव्य को कहते हैं । यहीं आगे (३।१९९) क्षेत्रपाल को बलि देने के प्रसंग में इस अर्थ में हेतु शब्द का प्रयोग हुआ है । कारण द्रव्य के पान से जो आनन्द उच्छलित होता है, वही उस शक्ति का स्वरूप है । इसका अभिप्राय यह है कि शोधन के कारण अमृतस्वरूप हुए द्रव्य के पान से उच्छलित आनन्द मात्र ही उस देवी का शरीर है । वह देवी दूसरी कोई नहीं है, स्वयं इस शास्त्र का श्रवण करने वाली तुम ही हो । अनाश्रित स्वरूप मेरी विमर्शात्मिका अनाश्रिता शक्ति तुम ही हो । साधक अपनी इच्छानुसार जिस फल की कामना करता है, वह भगवती उसे सब कुछ देती है । उसका 'महापद्म' इत्यादि मन्त्र से आवाहन कर पूजन करे । इस मन्त्र का अर्थ है—

महापद्मवन में स्थित, करणानन्द स्वरूपिणी, सब प्राणियों का कल्याण करने वाली हे परमेश्वरि माता ! आओ आओ ।।

यहाँ प्रश्न उठता है कि 'महापद्मवनान्तस्थाम्' इस पद से अनाश्रित देव और अनाश्रिता देवी का यहाँ आवाहन कर कामेश्वर और कामेश्वरी के रूप में पूजन किया जाता है, इसका निर्णय कैसे होगा ? इसका उत्तर यह है कि महापद्मवन में बैठकर समस्त शास्त्रों का उपदेश करने वाले भगवान् अनाश्रित ही हैं । इसीलिये उनकी शक्ति अना-

---

१. केषु-झ. । २. श्रितां-क. ग. । ३. श्रीचक्रमध्यबैन्द-ख. ने. ज. झ. उ. । ४. रूपकुलाधोमुखसहस्रदलकमलमहापद्मवनमध्यस्थाम्-ख. ने. ज. झ उ. ।

1. हादि और कादि विद्या की दिव्यौघ, सिद्धौघ और मानवौघ गुरुपरम्परा ऋजुविमर्शिनी (पृ० २१८-२२४), अर्थरत्नावली (पृ० २१८-२२५), ज्ञानदीपविमर्शिनी (दीक्षा प्रकरण) और सौभाग्यसुधोदय (पृ० ३१८-३२०) में देखी जा सकती है ।



१. तस्येश्वरस्य-ख. ने. ज. उ. । २. 'नाम' नास्ति-ख. ने. ज. झ. उ. । ३. 'मम' नास्ति-झ., 'मम''''सर्वावयवभूषणः' नास्ति-ख. ने. ज. उ. । ४. तत्फलं-क. ग., फलं स्वसेवकेन-झ. ।

कथं घटते ? सदाशिवादीनां तु यद्यप्यागमशास्त्रवक्तृत्वमस्ति, तथापि महापद्मवनान्तस्थत्वं नास्ति । तदुक्तं स्वच्छन्दसंग्रहे—

अनाश्रितस्य मध्यस्थं व्योमपद्मं सुविस्तरम् ।
असंख्ययोजनायामं तत्र सिंहासनस्थितः[1] ॥
सूर्यकोट्यर्बुदप्रख्यः शशाङ्ककृतशेखरः ।
पञ्चवक्त्रो दशभुजस्त्रिपञ्चनयनः प्रभुः ॥
सर्वावयवसम्पूर्णो ब्रह्ममूर्तिः[2] सनातनः ।
सर्वज्ञः सर्वकर्ता च सर्वानुग्रहणे रतः ॥
सर्वरत्नसमाकीर्णः सर्वा[3]वयवभूषणः ।]
अनाश्रितकला देवो [4]तस्योत्सङ्गे सदा स्थिता ॥
पञ्चवक्त्रा त्रिनेत्रा च दशबाह्विन्दुशेखरा ।
व्यापिन्यादिचतुष्कं च तादृशं परिकीर्तितम् ॥
पूर्वा[5]द्युत्तरपर्यन्तं [6]दिग्गतैः सेवकैः शिवः ।
रुद्रकोट्यर्बुदानीकैः [7]स्वसारूप्यैःस्वशक्तिभिः ॥

श्रिता कहलाती है । अन्यथा 'महापद्मवनान्तस्था मदङ्कोपाश्रया भवती' इन विशेषणों की संगति नहीं बैठेगी । सदाशिव आदि को भी यद्यपि शास्त्र का प्रवक्ता माना गया है, तथापि इनका निवास महापद्मवन में नहीं है । स्वच्छन्दसंग्रह में इस विषय का विशद वर्णन किया गया है—

अनाश्रित लोक के बीच में असंख्य योजन विस्तार वाला विशाल व्योमपद्म है । वहाँ सिंहासन पर विराजमान, अरबों-करोड़ों सूर्यों के समान कान्ति वाले, शशांकशेखर, पाँच मुंह, दस भुजा और पन्द्रह नेत्रों वाले भगवान् अनाश्रित शिव विराजमान हैं । यह देव सभी अवयवों से परिपूर्ण सनातन ब्रह्म हैं, सर्वज्ञ और सर्वकर्ता हैं, सदा सब पर अनुग्रह करते रहते हैं । इनका शरीर नाना प्रकार के रत्नों और आभूषणों से सुशोभित है । इनकी गोद मे सदा अनाश्रित कला विराजमान रहती है। यह भी पाँच मुख, तीन नेत्र और दस बाहु वाली है । इनके भी ललाट में चन्द्रमा शोभित है। ऐसे ही स्वरूप वाली व्यापिनी[1] आदि चार शक्तियाँ पूर्व आदि दिशाओं में विद्यमान हैं। इन्हीं दिशाओं में विद्यमान समान रूपवाले लोकनाथों, सेवकों, करोड़ों-अरबों की संख्या वाली सेनाओं और

१. इतः परम्-'अनाश्रितस्येश्वरस्य मध्यस्थः परमेश्वरः' इत्यधिकः पाठः-झ. । २. बृहन्मूर्तिः-झ. । ३. भरणभूषितः-झ. । ४. तदुत्सङ्गे-ख. ने. ज. उ. । ५. दुत्तर-क. ग. । ६. नियोता सेविका शिवा-ख. ने. ज. उ. । ७. स्वस्वरूपस्व-झ. ।

1. पहले (पृ० ४७-४८) व्यापिनी को मध्य मे तथा सूक्ष्मा आदि चार शक्तियों की चार दिशाओं में स्थिति बताई गई है । व्यापिनी के साथ उन्हीं चार शक्तियों का उल्लेख यहाँ भी किया गया है ।



सेवितो[1] लोकनाथैस्तैः[2] सृष्ट्यादीनि करोति सः[3] ।
अनाश्रितोऽयं भगवान् पञ्चवक्त्रस्त्रिदृक् तथा ॥
दशबाहुश्चतुर्बाहुर्द्विबाहुश्चैकवक्त्रकः[4] ।
[5]कौलागमादिवक्ताऽसौ देवदेवः सदाशिवः ॥
परापरविभागेन प्रोवाचासंख्यमागमम् । इति ।

उत्तरपदेऽप्युक्तम्—

व्योमाम्बुजे सहस्रारे सितकेसरसंकुले ।
तत्रासीनं महादेवमपृच्छत् कुलनायिका ॥ (१।१)

इति ॥११०-११२॥

**त्वन्मयैरेव नैवेद्यादिभिरर्चयेत् ।**

भवतीम् इत्यत्राप्यन्वेति । भवतीं स्वसंविल्लक्षणाम् । त्वन्मयैरेव

पञ्चभूतमयं विश्वं तन्मयी सा सदाऽनघे ।
तन्मयी मूलविद्या च तत्तथा कथयामि ते ॥ (२।२८)

अपनी शक्तियों से सेवित यह अनाश्रित भगवान् शिव सृष्टि आदि कार्यों को सम्पन्न करते हैं । इनके पाँच मुँह, तीन नेत्र हैं । यह स्वरूप दस हाथ वाला, चार हाथ वाला, दो हाथ वाला और एक मुँह वाला भी है । यही देवदेव सदाशिव का स्वरूप धारण कर कौल आदि आगमों के तथा पर और अपर विभाग वाले अन्य असंख्य आगमों के प्रवक्ता हैं ॥

[1]उत्तरपद में भी कहा गया है—

श्वेत केसर से संकुल सहस्रार व्योमाम्बुज (अकुल पद्म) में विराजमान महादेव से कुलनायिका भगवती ने पूछा ॥११०-११२॥

यह पूजा संविच्छक्तिस्वरूपिणी आप भगवती के विस्फार से निष्पन्न नैवेद्य आदि से की जानी चाहिये ॥

ऊपर के सन्दर्भ में आया 'भवतीम्' शब्द भी यहाँ गृहीत होता है । स्वसंवित्स्वरूपिणी आप भगवती की पूजा आपकी इच्छा से निर्मित नैवेद्य आदि से की जानी चाहिये । पहले (२।२८) बताया गया है—

१. सेविता-ख. ने. ज. उ. । २. पालैश्च-झ. । ३. सा-ख. ज. झ. । ४. बाहुकः-क. विहाय सार्वत्रिकः पाठः । ५. लोका-क. ग. ।

1. यहाँ उत्तरपद के नाम से उद्धृत वचन उत्तरषट्क नामक ग्रन्थ का प्रथम श्लोक है । शिवानन्द और विद्यानन्द (पृ० १०,७०, २३१, २७०) ने उत्तरषट्क के नाम से ही इस ग्रन्थ को उद्धृत किया है । लघुस्तव के जैन टीकाकार सोमतिलक सूरि भी इस ग्रन्थ को इसी नाम से स्मरण करते हैं । मद्रास और त्रिवेन्द्रम् में कुलदीपिका टीका के साथ इसके हस्तलेख उपलब्ध हैं । त्रिपुरा सम्प्रदाय का यह महत्त्वपूर्ण ग्रन्थ है ।

इति पूर्वोक्तरीत्या [1]पञ्चभूतानि भवदिच्छाविजृम्भितानि त्वद्रूपाणि,

[2]पञ्चरूपिणमात्मानं दिव्यैः पञ्चोपचारकैः ।
[3]अर्पयेत् सह गन्धेन पृथिवीं कुसुमेन खम् ॥
धूपेन वायुं दीपेन तेजोऽन्नेन रसं पुनः ।

इति प्रामाणिकवचनोक्तरीत्या [4]तैरेव नैवेद्यादिभिरर्चयेत्। नैवेद्यादिभिरित्यादिपदेन गन्धपुष्पधूपदीपनैवेद्यानि गृह्यन्ते। सुगन्धवत्पदार्थानुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिर्गन्धसमर्पणम्। [5]सुशब्दवत्पदार्थानुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिः पुष्पसमर्पणम्। [6]सुस्पर्शवत्पदार्थानुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिर्धूपसमर्पणम्। सुरूपवत्पदार्थानुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्ति-

---

यह विश्व पंचभूतमय है। हे अनघे! यह परा देवता भी पंचभूतमयी है और यह मूलविद्या परादेवता और पंचभूत दोनों का बोध जिस तरह से कराती है, अब मैं उसका वर्णन कर रहा हूँ॥

इस तरह पंचभूत की उत्पत्ति भगवती की इच्छा से ही होती है, अतः ये सब भगवती के स्वरूप हैं। किसी प्रामाणिक व्यक्ति ने कहा है—

पंचमहाभूत से उत्पन्न इस देह में विराजमान स्वात्मस्वरूप को दिव्य पंचोपचार से पूजा करे। गन्ध के साथ पृथिवी को, पुष्प के साथ आकाश को, धूप के साथ वायु को, दीप के साथ तेज को और अन्न (नैवेद्य) के साथ रस को समर्पित किया जाता है॥

इसके अनुसार भगवतीस्वरूप इन पाँच महाभूतों को ही यहाँ नैवेद्य आदि के रूप में समर्पित करे। आदि पद से नैवेद्य के साथ गन्ध, पुष्प धूप, दीप का ग्रहण होता है। सुगन्धित पदार्थों का अनुभव करके उनको अपने भीतर के प्रमाता को समर्पित कर देना गन्धसमर्पण है। सुन्दर शब्द से परिपूर्ण गान आदि का अनुभव कर उसको अपने भीतर के प्रमाता को समर्पित कर देना पुष्पसमर्पण है। सुन्दर सुकोमल स्पर्श से परिपूर्ण पदार्थों का अनुभव कर उसको अपने भीतर के प्रमाता को समर्पित कर देना धूपसमर्पण है। सुन्दर स्वरूप वाले पदार्थों का अनुभव कर उनको अपने भीतर के प्रमाता को समर्पित कर देना दीपसमर्पण है। स्वादु रस से परिपूर्ण पदार्थों का अनुभव कर उनको अपने भीतर के प्रमाता को समर्पित कर देना नैवेद्यसमर्पण है। इसका अभिप्राय यह है कि जो इन्द्रियाँ प्रायः पराङ्मुख (बाहर की तरफ) दौड़ती हैं, उनको प्रत्यङ्मुख (भीतर

---

१. 'पञ्च''''त्वद्रूपाणि' इत्यस्य स्थाने 'पञ्चोपचारैरर्चयेत्' इति पाठः–ख. ने. ज. उ.। २. नास्त्येषा पङ्क्तिः–ख. ने. ज. उ.। ३. अर्च–ने. ज. झ.। ४. 'तैरेव''''गृह्यन्ते' इत्यस्य स्थाने 'नैवेद्ययागं चरेत्। कोऽर्थः' इति पाठः–ख. ने. ज. झ. उ.। ५. तन्त्र्यात्मशब्दानु–ख. ने. ज. झ. उ.। ६. 'सु' नास्ति–ख. ने. ज. झ. उ.।



दीपसमर्पणम्। स्वादु[1]रसवत्पदार्थानुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिर्नैवेद्यसमर्पणमित्यर्थः। तदुक्तं मुख्याम्नायरहस्ये—

इन्द्रियद्वार[2]संग्राह्यैर्गन्धाद्यैः स्वात्मदेवता।
[3]स्वभावेन समाराध्या ज्ञातुः सोऽयं महामखः॥ इति।

बहिरपि गन्धपुष्पधूपदीपनैवेद्यानि [4]पृथिव्याकाशवायुतेजःसलिलभावनया देव्यै समर्पयेदि[5]त्युपचारोपनिषत्॥११२॥

**त्रिकोणे तत्स्फुरत्तायाः प्रतिबिम्बाकृतीः पुनः ॥११२॥**
**तत्तत्तिथिमयीर्नित्याः काम्यकर्मानुरूपिणीः[6] ।**

त्रिकोणे श्रीचक्रस्य त्रिकोणे[7] रेखात्रये, तत्स्फुरत्तायाः प्रतिबिम्बाकृतीः, "गुणाः पञ्चदश प्रोक्ता भूतानां तन्मयी शिवा" (२।३०) इत्यत्रैव पूर्वोक्तरीत्या भूतगुणात्मिकायाः पञ्चदशाक्षरशरीरिण्याः[8] श्रीविद्यायास्तत्र[9] स्फुरणात् पञ्चदशप्रतिबिम्बरूपाः, तत्तत्तिथिमयीः तत्संख्याकप्रतिपदादितिथ्यात्मिकाः, काम्य-

---

की तरफ) बना देना ही आन्तर पंचोपचार पूजा है। मुख्याम्नायरहस्य[1] नामक ग्रन्थ में बताया गया है—

इन्द्रियों के द्वारा जिनका संग्रह किया जाता है, उन गन्ध आदि से स्वात्मदेवता की स्वाभाविक पूजा करनी चाहिये। यही योगी साधक का महान् यज्ञ है॥

बाह्य पूजा में भी गन्ध, पुष्प, धूप, दीप और नैवेद्य का देवी को समर्पण पृथिवी, आकाश, वायु, तेज और जल की भावना के साथ ही करना चाहिये। पंचोपचार पूजा का यही रहस्य है॥११२॥

**त्रिकोण में श्रीविद्या के पन्द्रह अक्षरों की प्रतिबिम्ब-स्वरूपिणी पन्द्रह तिथिनित्याओं का पूजन कामना के अनुसार करे॥११२-११३॥**

श्रीचक्र के मध्यत्रिकोण को तीन रेखाओं में पन्द्रह तिथिनित्याओं का पूजन करे। पहले (२।३०) बताया गया है—"पाँच भूतों के पन्द्रह गुण होते हैं। अतः पंचभूतमयी यह विद्या भी पन्द्रह अक्षरों वाली है"। तदनुसार भूतगुणात्मिका पंचदशाक्षरी विद्या इस त्रिकोण में प्रतिबिम्बित होकर पन्द्रह तिथिनित्याओं का स्वरूप धारण कर लेती है।

---

१. स्वादूपदंशवत्–ख. ने. ज. झ. उ.। २. ग्राम–क. ख. ग.। ३. स्वाभेदेन–क. ग.। ४. पृथिवीवाय्वाकाशतेजः–ख. ने. ज. झ.। ५. दित्युपनि–ख. ने. ज. झ. उ.। ६. सारिणीः–क. ख. ग. ने.। ७. णरे–झ. उ.। ८. शालिन्याः–ख. ने. ज. झ. उ.। ९. 'तत्र' नास्ति–ख. ने. ज. उ.।

1. पृ० २३० की टिप्पणी देखिये।

कर्मानुरूपिणो:[1] "नवचक्रक्रमो[2] योऽसौ महावश्यादिसिद्धिदः" इति संकेतपद्धत्युक्तरीत्या बाह्यचक्रार्चनं काम्यं कर्म, तदनुरूपकरचरणादिमद्रूपधारिणी:[3]। उत्पत्तिविनाशरहितत्वान्नित्याः,

ततः कामेश्वरी नित्या नित्या च भगमालिनी ।
नित्यक्लिन्नाऽपि[4] च तथा भेरुण्डा वह्निवासिनी ॥
महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी ।
नित्या नीलपताका च विजया सर्वमङ्गला ॥
ज्वालामालिनी[5] चित्रा चेत्येवं नित्यास्तु षोडश । (१।२६-२८)

इति चतुःशतीशास्त्रोक्ताः । पुनः शब्दादर्चयेदित्यनुषङ्गः ॥११२-११३॥

**तत्र प्रकटयोगिन्यश्चक्रे त्रैलोक्यमोहने ॥११३॥**

तत्र श्रीचक्रे । त्रैलोक्यमोहने चक्रे पूर्वोक्त(१।८२)निर्वचने चतुरस्रत्रय-

---

इसका भाव यह है कि इस त्रिकोण में श्रीविद्या के पन्द्रह अक्षर प्रतिबिम्बित होते हैं और वे ही प्रतिपत् आदि पन्द्रह तिथिनित्याओं का स्वरूप धारण कर लेते हैं । इनकी पूजा विभिन्न कामनाओं की पूर्ति के लिये की जाती है । संकेतपद्धति में बताया गया है— "यह जो नवचक्र का क्रम बताया गया है, वह महावश्य आदि सिद्धियों का देने वाला है" । बाह्य चक्र की पूजा एक प्रकार का काम्य कर्म है । यह भगवती उस काम्य कर्म की सिद्धि के लिये तदनुरूप कर-चरण आदि से संयुक्त स्वरूप धारण कर लेती है । ये सब स्वरूप 'नित्या' के नाम से इस लिये कहे जाते हैं कि ये सब उत्पत्ति और विनाश से रहित हैं । चतुःशती शास्त्र में इन पन्द्रह नित्याओं के नाम गिनाये गये हैं—

कामेश्वरी नित्या, भगमालिनी नित्या, नित्यक्लिन्ना, भेरुण्डा, वह्निवासिनी, महाविद्येश्वरी, दूती, त्वरिता, कुलसुन्दरी, नित्या, नीलपताका, विजया, सर्वमङ्गला, ज्वालामालिनी और चित्रा । महात्रिपुरसुन्दरी को मिलाने से इनकी संख्या सोलह होती है ॥

श्लोक में पुनः शब्द आया है । इससे 'अर्चयेत्' क्रिया का अध्याहार किया जाता है । इसका अभिप्राय यह होगा कि त्रिकोण में पन्द्रह तिथिनित्याओं का पूजन अपनी कामना की पूर्ति के लिये करे ॥११२-११३॥

उस श्रीचक्र में स्थित त्रैलोक्यमोहन नामक चक्र में प्रकट योगिनियों का पूजन करे ॥११३॥

उस श्रीचक्र में स्थित त्रैलोक्यमोहन चक्र में, जिसका कि निर्वचन पहले (१।८२) बताया जा चुका है, तीन चतुरस्र के लेखन से सम्पन्न होने वाले उस चक्र में प्रकट

१. सारिणीः-क. ख. ग. ने. । २. मयो-ख. झ. । ३. धारिण्यः-ख. ने. ज. झ. उ. । ४. भिधा नित्या-मु. । ५. लिनिका चित्रेत्येवं-ख. ने. ज. झ. उ. ।



लक्षणे । प्रकटयोगिन्यः, यष्टव्या इत्युत्तरत्र[1] (१।११६) स्थितेनान्वयः ॥११३॥

प्रकटशब्दनिर्वचनमाह—

**मातृकास्थूलरूपत्वात् त्वगादिव्यापकत्वतः ।**
**योगिन्यः प्रकटा ज्ञेयाः स्थूलविश्वप्रधात्मनि ॥११४॥**

मातृकाः[2] परापश्यन्तीमध्यमावैखर्यः, तासु स्थूलमकारादिक्षकारान्तं पञ्चाशद्वर्णमयं वैखरीरूपम् । तदुक्तं स्वच्छन्दसंग्रहे—"स्थूलं पञ्चाशदाकारम्"[4] इति । तद्रूपत्वात् मातृका[5]स्थूलरूपवैखरीवर्णवर्गाष्टकमयत्वात् सिद्धीनां ब्राह्म्यादीनां च । तदुक्तं चतुःशत्याम्–

वर्गानुक्रमयोगेन [1]यस्यां मात्रष्टकं स्थितम् ।
वन्दे तामष्टवर्गोत्थमहासिद्धयष्टकेश्वरीम् ॥ (१।११) इति ।

---

योगिनियों का पूजन करना चाहिये । ११६ वे श्लोक में स्थित 'यष्टव्याः' पद का यहाँ भी अन्वय किया जाता है ॥११३॥

प्रकट शब्द का निर्वचन बताते हैं—

मातृका का स्थूल स्वरूप इनका आधार है, त्वक् आदि धातुओं में ये व्याप्त हैं, अतः स्थूल विश्व को धारण करने वाले भगत्रयात्मक चक्र में स्थित ये योगिनियाँ प्रकट कहलाती हैं ॥११४॥

परा, पश्यन्ती, मध्यमा और वैखरी ये चार मातृकाएँ हैं । इनमें अकार से क्षकार पर्यन्त पचास वर्णों वाला वैखरी वाणी का आधार स्थूल माना जाता है । स्वच्छन्दसंग्रह में स्पष्ट बताया गया है—"पचास अक्षरों वाला यह आकार स्थूल है" । मातृका का यह स्थूल स्वरूप वैखरी वाणी के आठ वर्गों में विभक्त है और ब्राह्मी आदि सिद्धियाँ इन्हीं स्थूल वर्णों की अधिष्ठात्री देवियाँ हैं, अतः ये प्रकट योगिनियाँ कही जाती हैं । [1]चतुःशती शास्त्र में कहा गया है—

पूर्णाहन्ता स्वरूपिणी जिस देवी में वर्ग के क्रम से आठ ब्राह्मी प्रभृति मातृकाएँ स्थित हैं, आठ मातृका-वर्णों से उत्पन्न होने वाला आठ सिद्धियों की स्वामिनी उस महासिद्धिस्वरूपा भगवती की मैं वन्दना करता हूँ ॥

---

१. त्तरस्थि-ख. ने. ज. झ. उ. । २. प्रथा-ख. ने. ज. झ. उ. । ३. कायाः.... यात्मिकायाः स्थूल-ख. ने. ज. झ. उ. । ४. दक्षरम्-क. ग. । ५. 'स्थूलरूप' नास्ति-ख. ने. ज. उ. । ६. महासिद्धयष्टकं-क. ग. ।

1. पृ० ९४ की टिप्पणी देखिये ।

त्वगादिव्यापकत्वत: त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रौजस [1]आदिशब्देन गृह्यन्ते। तद्व्यापकत्वात् त्वगाधारभ्रूमध्य-रक्तनितम्ब-मांसनाभि-मेदोहृदय-अस्थिकण्ठ-मज्जास्य-शुक्रनासापुट-(क्रोध ? ओजो)ललाटचक्रेषु स्थितत्वाद् ब्राह्म्यादीनाम्। स्थूलविश्व[2]प्रधात्मनि (इति) स्थूलत्वकथनम्[3]। अत एव विश्वं प्रकर्षेण धत्त इति विश्वप्रधा[4] विश्वम्भरा, तदात्मनि भूगृह[5]त्रयात्मके त्रैलोक्यमोहने चक्रे स्थितत्वात्। मातृकास्थूलरूपत्वाद् [6]वैखर्यवयवत्वाच्च त्वगादि-

ये योगिनियाँ त्वक् आदि [1]आठ स्थूल धातुओं की भी स्वामिनियाँ हैं। आदि शब्द से असृग् (रक्त), मांस, मेदा, अस्थि, मज्जा, शुक्र और ओज का ग्रहण किया जाता है। त्वचा के आधार भ्रूमध्य में, रक्त के आधार नितम्ब में, मांस के आधार नाभि में, मेदा के आधार हृदय में, अस्थि के आधार कण्ठ में, मज्जा के आधार आस्य (मुँह) में, शुक्र के आधार नासापुट में और क्रोध (ओज) के आधार ललाट चक्र में क्रमशः ब्राह्मी आदि योगिनियाँ स्थित हैं। इस कारण से भी ये योगिनियाँ प्रकट कही जाती हैं। स्थूल विश्व का प्रथन करने वाली इन योगिनियों को स्थूल मानना इसलिये भी उचित है कि ये देवियाँ स्थूल विश्व को भलीभाँति [2]धारण करने वाली विश्वम्भरा(पृथिवी)स्वरूप भूगृहत्रयात्मक त्रैलोक्यमोहन चक्र में स्थित हैं। इस तरह से मातृकाओं की स्थूलरूपता के कारण, वैखरी मातृका के स्थूल अवयवों के कारण, त्वग् आदि धातुओं के स्थूलशरीर की अवयवता को लेकर इन सबमें व्यापक रूप से रहने के कारण और त्रैलोक्यमोहन

१. आदिना गृ–ख. ने. ज. झ. उ.। २. प्रथा–ख. ने. ज. झ. उ.। ३. नात्–क. ग. ब.। ४. प्रथा–ख. ने. ज. झ. उ.। ५. हात्मके–ख. ने. ज. उ.। ६. 'वैखर्यवयवत्वाच्च' नास्ति–ख. ने. ज. झ. उ.।

1. यहाँ आठ धातुओं की चर्चा है और इनका संबन्ध आठ वर्गों की अधिष्ठात्री ब्राह्मी आदि आठ देवियों से बताया गया है, जो अणिमा आदि आठ सिद्धियों की अधिष्ठात्री हैं। अष्टम धातु के रूप में यहाँ क्रोध (ओज) की चर्चा है। सात्त्विक क्रोध को ही ओज कहा जा सकता है। तेजस्वी पुरुष का ओज कभी कभी क्रोध के रूप में भी प्रकट होता देखा गया है। प्रसंगवश यह अवधेय है कि आयुर्वेद के ग्रन्थों में प्रथम धातु के रूप में रस वर्णित है, त्वक् नहीं। पहले (२।६०-६१) छः धातुओं की जो चर्चा आई है, उनका संबन्ध छः डाकिनियों से है।

2. यहाँ दीपिकाकार ने "विश्वं प्रकर्षेण धत्त इति विश्वप्रधा" इस तरह से प्रधा शब्द की व्युत्पत्ति दी है। तदनुसार दीपिका में सर्वत्र प्रथा शब्द के स्थान पर प्रधा शब्द होना चाहिये, किन्तु प्रस्तुत स्थल को छोड़ कर यह पाठ किसी भी मातृका में कहीं भी नहीं मिलता। यहाँ भी मूल ग्रन्थ की अनेक मातृकाओं में 'प्रथा' पाठ ही मिलता है।



धातूनां स्थूलशरीरावयवतया तद्व्यापकत्वात् त्रैलोक्यमोहनचक्रस्य स्थूलविश्वम्भरात्मकत्वाच्च[1] तदन्तर्गता: सिद्धयो ब्राह्म्याद्याश्च प्रकटा ज्ञेया इत्यर्थः ॥११४॥

अन्त्यभूगृहनिवासिनोनां नामग्रहणपूर्वकं ध्यानमाह—

**अणिमाद्या महादेवि सिद्धयोऽष्टौ व्यवस्थिताः।**
**तास्तु[2] रक्ततरा वर्णैर्वराभयकरास्तथा ॥११५॥**
**धृतचिन्तामहारत्ना मनीषितफलप्रदा:।**

अणिमाद्याः "अणिमां पश्चिमद्वारे" (१।१५३) इत्यादि चतु:शतीशास्त्रोक्ता:। लघिमामहिमेशितावशिताप्राकाम्यभुक्तीच्छाप्राप्तिसर्वकामाख्याः[3] सिद्धयस्तत्रादिशब्देन गृह्यन्ते। अष्टौ व्यवस्थिता [4]अष्टसिद्धयो निघण्टुप्रसिद्धाः। अत्र तु दशेति तात्पर्यम्—

वामजङ्घां समारभ्य वामादिक्रमतोऽपि च।
सिद्ध्यष्टकं न्यसेत् तेषु द्वयं पादतले न्यसेत् ॥ (३।७९-८०)

चक्र की स्थूल विश्वम्भरात्मकता (पार्थिवता) के कारण भी इनमें रहने वाली सिद्धियाँ और ब्राह्मी प्रभृति देवियाँ प्रकट योगिनियाँ कही जाती हैं ॥११४॥

अन्तिम भूगृह में रहने वाली शक्तियों के नाम और ध्यान इस प्रकार हैं—

हे महादेवि! अणिमा आदि [1]आठ सिद्धियाँ यहाँ स्थित हैं। इनका वर्ण चटक लाल है। वर और अभय मुद्रा में ये स्थित हैं। चिन्तामणि नामक महारत्न इनके पास है, जिससे कि ये साधक को अभीष्ट फल प्रदान करती हैं ॥११५-११६॥

चतु:शती शास्त्र (१।१५३-१५५) में अणिमा, लघिमा, महिमा, ईशिता, वशिता, प्राकाम्य, भुक्ति, इच्छा, प्राप्ति और सर्वकामा नाम की दस सिद्धियां वर्णित हैं। आदि शब्द से अणिमा तथा अन्य सिद्धियों का ग्रहण किया जाता है। इनमें से आठ सिद्धियाँ निघण्टु (कोश) ग्रन्थों में भी प्रसिद्ध हैं, यहाँ दस सिद्धियाँ वर्णित हैं। न्यास प्रकरण में यहाँ (३।७९-८०) वाम जंघा के वाम भाग से और वाम अन्तराल क्रम से आठ सिद्धियों

१. 'च' नास्ति–ख. ने. ज. झ. उ.। २. तासु–क. ख. ग. ने.। ३. ख्यसिद्धयो दशादि–ख. ने. झ. उ.। ४. अष्टौ–ख. ने. ज. झ. उ.।

1. दीपिका और सेतुबन्ध दोनों टीकाओं में आठ शब्द को दस का उपलक्षण माना है। यहाँ दस सिद्धियाँ मानी गई हैं, अतः ध्यान भी दसों सिद्धियों का होना चाहिये। आठ वर्गों की अधिष्ठात्री सिद्धियाँ अणिमा आदि आठ ही हैं, अतः उनकी ओर इंगित करने के लिये मूल में आठ शब्द दे दिया गया है[1]।

इत्यत्रैवोक्तत्वात्[1] । महारत्नं चिन्तामणिः । शेषं[2] स्पष्टम् ॥११५-११६॥

**ब्राह्म्याद्या अपि तत्रैव यष्टव्याः [3]क्रमशः प्रिये ॥११६॥**

ब्राह्म्याद्याः "ब्रह्माणीं पश्चिमद्वारे" (१।१५६) इति चतुःशतीशास्त्रोक्ताः । तत्रैव मध्यचतुरस्रे यष्टव्याः । क्रमशः क्रमेण ॥११६॥

तासां प्रत्येकं[4] ध्यानमाह—

**ब्रह्माणी पीतवर्णा च चतुर्भिः शोभिता मुखैः ।**
**वरदाऽभयहस्ता च कुण्डिकाक्षस्रगुज्ज्वला[5] ॥११७॥**

करैरिति शेषः । शिष्टं स्पष्टम् ॥११७॥

**माहेश्वरी श्वेतवर्णा त्रिनेत्रा शूलधारिणी ।**
**कपालमेणं परशुं दधाना पाणिभिः प्रिये ॥११८॥**

एकेन पाणिना शूलधारिणी, त्रिभिः कपालमेणं परशुं दधाना ॥११८॥

---

का तथा बची दो सिद्धियों का पाद तल में न्यास बताया गया है । चिन्तामणि को महारत्न माना जाता है । शेष शब्दों का अर्थ स्पष्ट है ॥११५-११६॥

हे प्रिये ! ब्राह्मी प्रभृति देवियों की भी यहीं क्रमशः पूजा करनी चाहिये ॥११६॥

चतुःशती शास्त्र (१।१५६-१५७) में वर्णित ब्रह्माणी आदि देवियों की भी पूजा क्रमशः यहीं मध्य चतुरस्र में करनी चाहिये ॥११६॥

इनमें से प्रत्येक का ध्यान बताते हैं—

ब्रह्माणी का वर्ण पीत है। चार मुँह इसकी शोभा बढ़ाते हैं। वर और अभय मुद्रा, कुण्डिका और अक्षमाला से इसके चार हाथ शोभायमान है ॥११७॥

वर, अभय, कुण्डिका और अक्षमाला का संबन्ध 'करैः' शब्द का अध्याहार कर किया जाता है । बाकी का अर्थ स्पष्ट है ॥११७॥

माहेश्वरी का वर्ण श्वेत है। यह तीन नेत्रों वाली है । हे प्रिये ! यह अपने चार हाथों में शूल, कपाल, एण (हिरन) और परशु धारण किये हुए है ॥११८॥

एक हाथ से यह शूल को धारण करती है और बाकी तीन हाथों में कपाल, एण और परशु धारण किये हुए है ॥११८॥

---

१. वोक्तम्–ख. ने. ज. उ. । २. शिष्टं–ख. ज. झ. उ. । ३. क्रमतः–क. ग. । ४. 'प्रत्येकं' नास्ति–ख. ने. ज. झ. उ. । ५. लसत्करा–ख. ग. ने. ज. झ. ।



**कौमारी पीतवर्णा च शक्तितोमरधारिणी ।**
**वरदाभयहस्ता च ध्यातव्या [1]परमेश्वरी ॥११९॥**

स्पष्टम् ॥११९॥

**वैष्णवी श्यामवर्णा च शङ्खचक्रगदाब्जकान्[2] ।**
**हस्तपद्मैश्च बिभ्राणा भूषिता दिव्यभूषणैः ॥१२०॥**
**वाराही श्यामलच्छाया [3]पोत्रिवक्त्रसमुज्ज्वला ।**
**हलं च मुसलं खड्गं खेटकं दधती भुजैः ॥१२१॥**

स्पष्टम् ॥१२०-१२१॥

**ऐन्द्री श्यामलवर्णा च वज्रोत्पललसत्करा ।**

स्पष्टम् ॥१२२॥

**चामुण्डा कृष्णवर्णा च शूलं डमरुकं तथा ॥१२२॥**
**खड्गं वेतालकं चैव दधाना दक्षिणैर्भुजैः[4] ।**
**नागखेटकघण्टाख्यान्[5] दधानान्यैः कपालकम् ॥१२३॥**

---

कौमारी का वर्ण पीत है। इस परमेश्वरी का ध्यान शक्ति और तोमर धारिणी देवी के रूप में करना चाहिये। इसके अन्य दो हाथ वर और अभय मुद्रा से सुशोभित हैं ॥११९॥

इसका अर्थ स्पष्ट है ॥११९॥

वैष्णवी श्याम वर्ण की है। यह अपने हाथों में शंख, चक्र, गदा और पद्म धारण किये हुए है और दिव्य भूषणों से भूषित है। वाराही श्यामल वर्ण की है, इसका मुह सूकर का है और यह अपनी भुजाओं में हल, मुसल, खड्ग (तलवार) और खेटक (दण्ड) लिये हुए है ॥१२०-१२१॥

अर्थ स्पष्ट है ॥१२०-१२१॥

ऐन्द्री श्यामल वर्ण की है। इसके दोनों हाथों में वज्र और कमल शोभित है ॥

अर्थ स्पष्ट है ॥१२२॥

चामुण्डा कृष्ण वर्ण की है। यह अपने दाहिने चार हाथों में शूल, डमरु, खड्ग और वेताल धारण किये हुए है और बायें चार हाथों में नाग, खेटक, घण्टा और कपाल लिये हुए है ॥१२२-१२३॥

---

१. च सुरेश्वरि-ख. ने. छ. ज. झ. । २. वराभयान्–क. ग. उ. । ३. पोत्र–क. । ४. णैः करैः–क. ग. । ५. मुण्डाख्यं–ख., घण्टाख्यं–ने. च. छ. ।

वेतालः पिशाचविशेषः । शूलडमरुखड्गवेतालान् दक्षिणैः करैः, नागखेटक-[1]घण्टाकपालानि वामकरैर्दधानेत्यर्थः ॥१२२-१२३॥

**महालक्ष्मीस्तु पीताभा पद्मौ[2] दर्पणमेव च ।**
**मातुलुङ्ग[3]फलं चैव दधाना परमेश्वरी ॥१२४॥**

स्पष्टम् । ननु मुद्रादशकं किमित्यन्तश्चतुरस्रे पूज्यत्वेन [4]नोक्तम् ? सत्यम्, चतुःशतीशास्त्रे[5]ऽनुक्तत्वादत्रापि[6] प्राधान्येन[7] नाख्याताः, किन्तु श्रीचक्रन्यासे "मूलाधारे न्यसेन्मुद्रादशकं साधकोत्तमः" (३।७७) इति सूचिताः । अतोऽन्तश्चतुरस्रे मुद्रादशकमपि पूजयेत् ॥१२४॥

**एवं ध्यात्वा यजेदेताश्चक्रेशीं त्रिपुरां ततः ।**

एवम् उक्तप्रकारेण । एताः प्रकटयोगिनीर्ध्यात्वा, चक्रेशीं त्रैलोक्यमोहनचक्रेशीं त्रिपुरां यजेत् ॥१२५॥

---

वेताल एक प्रकार का पिशाच है । चामुण्डा के दाहिने हाथों में शूल, डमरु, खड्ग और वेताल तथा बाये हाथों में नाग, खेटक, घण्टा और कपाल सुशोभित हैं ॥१२२-१२३॥

**महालक्ष्मी का वर्ण पीत है । इस परमेश्वरी के चार हाथों में से दो में पद्म और बाकी के दो हाथों में दर्पण और मातुलुंग फल (चकोतरा) सुशोभित हैं ॥१२४॥**

इसका अर्थ स्पष्ट है । प्रश्न होता है कि चतुरस्र चक्र में दस मुद्राओं का भी पूजन होना चाहिये । उनका यहाँ उल्लेख क्यों नहीं किया गया ? आपका कहना सही है । चतुःशती शास्त्र में मुद्राओं का पूजन नहीं बताया गया है, इसीलिये यहाँ भी उनका उल्लेख नहीं किया गया है, किन्तु श्रीचक्र न्यास प्रकरण में यहाँ (३।७७) मूलाधार में दस मुद्राओं का न्यास बताया गया है । अतः इस चतुरस्र चक्र में ही दस मुद्राओं का भी पूजन करना चाहिये ॥१२४॥

**इस तरह से इन प्रकट योगिनियों का ध्यान कर पूजा करे और तब चक्रेशी त्रिपुरा का भी पूजन करे ॥**

इस तरह से ऊपर बताई गई विधि से इन प्रकट योगिनियों का ध्यान करके तब त्रैलोक्यमोहन चक्र की स्वामिनी त्रिपुरा की भी पूजा करे ॥१२५॥

---

१. मुण्डक–ख., घण्टाख्य–ने. झ. उ. । २. पद्म–क. ग., पद्मं–उ. । ३. लिङ्ग–क. छ. ज. । ४. नात्रोक्तं–झ. । ५. स्त्रेऽप्यनु–ख. झ. उ. । ६. दत्रैव–ख. झ. उ. । ७. न्येनाख्यातव्याः–ख. ने. ।



विद्यादेवतयोरभेदविवक्षया च त्रैलोक्यमोहनचक्रेशीविद्यानिर्वचनमाह—

**कर्मेन्द्रियाणां वैमल्यात् करशुद्धिकरी स्मृता ॥१२५॥**

आत्मतत्त्वगतयोरशुद्धयोरत्र कर्मकरणात्मनोर्द्वयोः ।
शुद्धतत्त्व[1]लयभावनामयी शुद्धिरात्मकरयोः परा मता ॥ (चि० स्त० ११)

इत्यस्मदुक्तरीत्याऽऽत्मतत्त्वस्याशुद्धत्वात् कर्मेन्द्रियाणामात्मतत्त्वान्तःपातित्वात् [2]करयोश्च कर्मेन्द्रियत्वादशुद्धयोः [3]कार्यकरणात्मनोः करयोः कार्ययोः, स्वकारणे शुद्धतत्त्वे शिवाद्वैतलयभावना करशुद्धिः, तत्करीयम् । स्मृता निरुक्ता ॥१२५॥

**का[4]र्यशुद्धिभवा सिद्धिरणिमा चात्र संस्थिता ।**

कारणात्मपरामृष्टकार्य[5]रूपाङ्गुलिस्थिताम् ।
करोमि चिन्मयीं शुद्धिं करयोः [6]स्पर्शशोधिनीम् ॥ (सु० वा० २४)

---

अब भगवान् यह कहना चाहते हैं कि विद्या और देवता में कोई भेद नहीं है । इसी अभिप्राय से त्रैलोक्यमोहन चक्र की स्वामिनी त्रिपुरा की करशुद्धिकरी विद्या से अभिन्नता बताते हुए उसका निर्वचन करते हैं—

**कर्मेन्द्रियों को विमल करने वाली यह विद्या करशुद्धिकरी कहलाती है ॥१२५॥**

साधक के दोनों हाथों की गिनती कर्मेन्द्रियों में होती है, जो कि अशुद्ध आत्मतत्त्व के अन्तर्गत आते हैं । इनकी शुद्ध शिवस्वरूप में लीन होने की भावना ही उत्कृष्ट शुद्धि मानी जाती है ॥

व्याख्याकार के चिद्विलास स्तव के इस वचन के अनुसार आत्मतत्त्व अशुद्ध है, कर्मेन्द्रियों की गिनती आत्मतत्त्व में ही होती है और हाथ कर्मेन्द्रिय होने से अशुद्ध हैं । इन कार्यकरणात्मक हाथों को शुद्धि यही है कि अपने कारण शुद्ध तत्त्व में, शिवाद्वय-भावना में उनको लीन कर दिया जाय । करशुद्धिकरी विद्या यही कार्य करती है ॥१२५॥

**कार्य की शुद्धि से उत्पन्न अणिमा नाम की सिद्धि भी यहीं रहती है ॥**

पाञ्चभौतिक देह में कार्यरूप से प्रकट हुई दाहिने और बायें हाथ की अंगुलियाँ वास्तव में अपने कारणभूत प्रकाश और विमर्श से अभिन्न हैं । प्रकाश और विमर्श स्वरूप कारण के रूप में भावना कर मैं इन कार्य रूप में परिणत अंगुलियों में चित्स्वरूपिणी शुद्धि का आधान कर रहा हूँ, जिससे कि मेरे दोनों हाथ शुद्ध हो जाँय और इनसे मैं जिन पदार्थों का स्पर्श करूँ, वे भी शुद्ध हो जाँय, उनमें किसी प्रकार का स्पर्श दोष न आवे ॥

---

१. गत–ख. ने. उ. । २. 'करयोश्च' नास्ति–ख. झ. उ. । ३. 'कार्यकरणात्मनोः' नास्ति–ख. झ. उ. । ४. कर–ख. च. ज. । ५. भूता–मु. । ६. परि–मु. ।

इत्यभियुक्तवचनोक्तरीत्या कार्यस्य शुद्धिर्नाम कारणतावन्मात्रतया पर्यवसानम् । "अणोरणीयान्" (क० उ० २।२०) इति श्रुत्युक्ताणीयसि कारणे विद्यमानस्यात्मनोऽणिमा सिद्ध्यती[1]त्यणिमासिद्धिः । सा चात्र त्रैलोक्यमोहने चक्रे स्थितेति तात्पर्यम् ॥१२६॥

द्वितीयचक्रे पूजां सवासनामाह—

**षोडशस्पन्दसन्दोहे चमत्कृतिमयीः कलाः ॥१२६॥**
**प्राणादिषोडशानां तु वा[2]यूनां प्राणनात्मिकाः ।**
**बीजभूताः[3] स्वरात्मत्वात् कलनाद् बीजरूपकाः[4] ॥१२७॥**
**अन्तरङ्गतया गुप्ता[5] योगिन्यः संव्य[6]वस्थिताः ।**
**कामाकर्षणरूपाद्याः सृष्टेः[7] प्राधान्यतः प्रिये ॥१२८॥**
**सर्वाशापूरणाख्ये तु चक्रे वामेन पूजयेत् ।**

स्पन्दो नाम परायास्तत्त्वरूपेण प्रसारः । [8]तदुक्तं परापञ्चाशिकायाम्—"सिसृक्षोः प्रथमस्पन्दः शिवतत्त्वं प्रभोः स्मृतम्" (श्लो० १८) इति । तेन षोडश

शिवानन्द मुनि की इस उक्ति के अनुसार कार्य की शुद्धि यही है कि वह अपने कारण में केवल कारण रूप में ही पर्यवसित (परिणत) हो जाय । कारण ब्रह्म के लिये श्रुति में बताया गया है—"वह अणु से भी अणुतर है" । इस अत्यन्त सूक्ष्म कारण में अवस्थित हो जाने पर साधक को अणिमा सिद्धि प्राप्त हो जाती है । वह सिद्धि त्रैलोक्यमोहन नामक चक्र में स्थित है । इस प्रकरण का यही तात्पर्य है ॥१२६॥

द्वितीय चक्र की पूजा और वासना का अब वर्णन करते हैं—

सोलह स्पन्दों के समूह रूप सर्वाशापरिपूरक चक्र में प्राण आदि सोलह पदार्थों में प्राण का संचार करने वाला चमत्कारमय कलाएँ रहती हैं । बीज (बिन्दु) से संयुक्त स्वर इनकी कलना करते हैं, अतः ये कलाएँ बीजस्वरूपिणी हैं । अन्तरङ्ग होने से ये गुप्त योगिनियाँ कहलाती हैं । इनके कामाकर्षिणी आदि नाम हैं । हे प्रिये ! सृष्टि की प्रधानता होने से सर्वाशापरिपूरक चक्र में इनकी पूजा वामावर्त क्रम से होनी चाहिये ॥१२६-१२९॥

परा शक्ति का तत्त्वों के रूप में जो प्रसार होता है, उसे स्पन्द कहते हैं । परापंचाशिका में बताया गया है—"सृष्टि करने के लिये उद्यत प्रभु का प्रथम स्पन्द शिव-

१. तीति सिद्धिः–ख. ने. ज. झ. उ. । २. प्राणानां–ख. ने. च. छ. ज. झ. । ३. तस्व–ख. ने. च. झ. । ४. रूपगाः–ख. ने. च. छ. ज. । ५. प्तयो–ख. ने. च. छ. ज. झ. । ६. संस्थिता मताः–ख. ने. च. छ. ज. झ. । ७. ष्टिप्रा–ख. ने. च. छ. ज. झ. उ. । ८. 'तदुक्तं''''षोडश स्पन्दाः' नास्ति–ख. ने. ज. उ. ।



स्पन्दाः षोडशविकारा भूतेन्द्रियमनांसि, तेषां सन्दोहः[1] । चमत्कारो नाम[2] तस्मिन् चिदतिशयोदयः । तदुक्तं क्रमोदये—"स्थैर्यमेति[3] चमत्कारो विना विषयसंगतिम्" इति । तन्मय्यो भूतेन्द्रियमनःसु चिदनुप्रविष्टाः कलाः षोडश[4] स्फुरन्ति, तदात्मिका इत्यर्थः । कलाः षोडशसंख्याकाः कलाभिधानाश्च । प्राण आदिर्येषां तेऽपानोदानसमानव्याननागकूर्मकृकरदेवदत्तधनञ्जया दश प्रसिद्धा वायवः । [5]अन्ये षडागमान्तरेषु मृग्याः, तेषां प्राणनात्मिकाः, [6]सर्वेषां प्राणना(त्मिकाः?त्मकाः)

तत्त्व माना गया है" । तदनुसार षोडश स्पन्द शब्द से यहाँ सोलह विकारों (पाँच महाभूत और एकादश इन्द्रिय) का ग्रहण किया जाता है । इनका संदोह (समूह) ही सर्वाशापरिपूरक चक्र के रूप में परिणत होता है । चमत्कार कोई अनोखी वस्तु होती है । क्रमोदय में वर्णित है—"विषयों का सम्पर्क हुए बिना ही चमत्कार, अर्थात् अद्भुत सहजानन्द स्फुरित हो उठता है" । इस चमत्कार से परिपूर्ण चिच्छक्ति सम्पन्न सोलह कलाएँ पाँच महाभूतों और एकादश इन्द्रियों में स्फुरित होकर तदात्मक बन जाती हैं । कला शब्द सोलह संख्या और कला दोनों का वाचक है । प्राण के साथ जुड़ा आदि शब्द अपान, उदान, समान, व्यान, नाग, कूर्म, कृकर, देवदत्त, धनंजय—इन सभी दस वायुओं का द्योतक है । अन्य[1] छः वायुओं के नाम अन्य आगमों में खोजने चाहिये । इन प्राणों में भी ये

१. सन्दोहः समूहः–ख. ने. ज. झ. उ. । २. नाम कश्चिद–क. । ३. मेव–ख. ने. ज. झ. उ. । ४. षोडशधा–ख. ने. ज. झ. उ. । ५. अन्येष्वाग–सार्वत्रिकः पाठः, सेतुबन्धानुसारी पाठोऽत्र स्थापितः । ६. 'सर्वेषां प्राणनात्मिकाः' नास्ति–ख. ज. झ. उ. ।

1. सभी मातृकाओं में मिले पाठ के अनुसार यहाँ अर्थ होगा कि इन दस वायुओं के नाम आगमान्तर से जानने चाहिये, किन्तु इनके नाम तो योगिनीहृदय (२।६२) में भी मिलते हैं । इनके लिये कालोत्तर (१०।५-६) आदि अन्य आगमों को देखने की आवश्यकता नहीं है । भास्करराय ने अपनी व्याख्या में दीपिका के इस प्रसंग को उठाया है और वहाँ स्पष्ट लिखा है कि इन दस वायुओं के अतिरिक्त अन्य छः वायुओं के नाम आगमान्तर से जानने चाहिये । तदनुसार हमने दीपिका का संशोधित पाठ मूल में रखा है । किन्तु अन्य किसी भी आगम में उक्त दस वायुओं के अतिरिक्त अन्य छः वायुओं के नाम नहीं मिलते । प्राण की पाँच वृत्तियों की आहंकारिकता की चर्चा हम पहले (२।५९) कर चुके हैं । यह अहंकार की समष्टयात्मक वृत्ति है । अहंकार की व्यष्टयात्मक वृत्तियाँ सोलह मानी गई हैं, जो कि इनके सात्त्विक, राजस और तामस भेद से प्रकट होती हैं । दीपिकाकार ने सोलह स्पन्दों के रूप में इन्हीं का ग्रहण किया है, किन्तु भास्करराय पाँच प्राण और एकादश इन्द्रियों की गणना षोडश स्पन्दों में करते हैं ।

प्राणादयो हि, (एते तु ? एतास्तु) तेषां प्राणादीनामपि प्राणनात्मिका इत्यर्थः। बीजभूता बिन्दुयुक्तत्वात्। स्वराः षोडश अकारादिविसर्गान्ताः, तदात्मकत्वात्। कलनात् प्रक्रमात्। सबिन्दुकस्वरप्राप्तत्वात् [1]कलनाद् बीजरूपकाः[2] [[3]स्वस्व-बीजस्वरूपाः। अन्तरङ्गतया षोडशविकाराणां त्वगादिधातुवत् तत्राप्रकटत्वात् तन्मय्यः।] तन्मया योगिन्यो गुप्ताः [4]संव्यवस्थिताः। अन्तरङ्गतया अन्तरङ्गम् अन्तरिन्द्रियं बुद्धिः, तच्चमत्कारमयत्वादेता अप्यन्तरङ्गाः, अत एव गुप्ताः, सर्वाशापूरणाख्ये तु चक्रे, योगिन्य इत्यत्र छान्दसत्वाद् द्वितीयार्थे प्रथमा। कामाकर्षणरूपाद्या "कामाकर्षणरूपां च" (१।१५८) इत्यादि चतुःशतीशास्त्रोक्ताः। सृष्टेः[5] प्राधान्यतः सृष्टौ वामचक्रस्यैव प्रधानत्वात्, अस्यैव[6] चक्रस्य सृष्टिरूपत्वात्। [7]अतस्ता योगिनीर्वर्मिन पूजयेद् वामावर्तक्रमेण[8] पूजयेत्। विकाराः षोडश विलासभूताः। प्राणादि[9]षोडशवायूनां जगत्प्राणनादिशक्त्यात्मिकाः सबिन्दुषोडशस्वरैराकलिताः प्रत्येकं तन्मयीरन्तरङ्गचिदनुप्रविष्टषोडशविकारतया गुप्ताः कामाकर्षिण्याद्याः कलाः सर्वाशापरिपूरके चक्रे वाममार्गेण पूजयेदित्यर्थः ॥१२६-१२८॥

ही कलाएँ प्राण का संचार करती हैं। बिन्दु से संयुक्त होने से ये बीजात्मक हैं। अकार से विसर्ग पर्यन्त स्वर सोलह हैं। ये सोलह कलाएँ इन स्वरों का ही प्रतिनिधित्व करती हैं। बिन्दु से संयुक्त इन सोलह स्वरों से इनकी पहचान होती है, अतः ये कलारूप योगिनियाँ बीजस्वरूपिणी मानी जाती हैं। ये योगिनियाँ गुप्त रूप से रहती हैं, क्योंकि ये अन्तरङ्ग हैं। बुद्धि भीतर की इन्द्रिय है, उसी के चमत्कार से, अनोखे विस्तार से, इनका निर्माण हुआ है। अतः ये भी अन्तरंग हैं और इसी लिये गुप्त रूप से सर्वाशापरिपूरक चक्र में रहती हैं। योगिनी शब्द में द्वितीया के अर्थ में प्रथमा विभक्ति का प्रयोग छान्दस है। चतुःशती शास्त्र (१।१५८-१६१) में इन कामाकर्षिणी आदि सोलह कलाओं (योगिनियों) के नाम बताये गये हैं। सृष्टि में वाम चक्र की प्रधानता रहने से और सर्वाशापरिपूरक के सृष्टि चक्र होने से इन योगिनियों की पूजा भी यहाँ वामावर्त क्रम से ही होनी चाहिये। इसका अभिप्राय यह है कि सोलह विकार परा शक्ति के विलास हैं। प्राण आदि सोलह वायुओं में प्राण का संचार करने वाली शक्तियाँ बिन्दुसंयुक्त सोलह स्वरों से आकलित होती हैं और उसी रूप में परिणत हो जाती हैं। अन्तःकरण में चिच्छक्ति के प्रवेश से प्राण आदि सोलह विकारों की सृष्टि होने से ये गुप्त हैं। इन कामाकर्षिणी आदि गुप्त योगिनियों की पूजा वामावर्त क्रम से सर्वाशापरिपूरक चक्र में की जाती है ॥१२६-१२९॥

१. 'कलनाद्' नास्ति–ख. ज. उ.। २. वगाः–ख. ज. उ.। ३. 'स्वस्व' ''तन्मय्यः' नास्ति–ख. ज. झ. उ.। ४. संस्थिताः–ख. ने. ज. झ.। ५. सृष्टिप्रा–ख. ने. ज. झ. उ.। ६. 'एव' नास्ति–ख. ने. ज. झ. उ.। ७. ततस्ताः–ख. ने. ज. झ. उ.। ८. णार्चयेत्–ख. ने. ज. झ. उ.। ९. दिदश–झ.।



एतासां ध्यानमाह—

**पाशाङ्कुशधरा ह्येता रक्ता रक्ताम्बरावृताः ॥१२९॥**

स्पष्टम् ॥१२९॥

तच्चक्रदेवतार्चने सिद्धिमाह—

**प्राणशुद्धिमयी सिद्धिर्लघिमा भोक्तुरात्मनः।**

"आनीदवातं स्वधया तदेकम्" (ऋ० १०।१२९।२) इति श्रुत्युक्तरीत्या विश्वप्राणन[2]रूपया स्वधया[3] सह यदेकरसमयं प्राणिति, तस्मिन् स्वकारणे लयः प्राणादीनां वायूनां शुद्धिर्नाम। अत्र प्राणशब्दो वायुमात्रोपलक्षणपरः। तेन वायुलयलक्षणायां शुद्धौ मनोलयलक्षणः समाधिर्भवति। ततस्तदेकरसभूतस्य भोक्तुरात्मनो जीवस्य यष्टुस्तद्गुणो लघिमा सिद्धिर्भवति ॥१३०॥

**त्रिपुरेशी च चक्रेशी पूज्या सर्वोपचारकैः ॥१३०॥**

इनका ध्यान बताते हैं—

ये सब गुप्त योगिनियाँ रक्त वर्ण की हैं, रक्त वस्त्र पहने हुए हैं और पाश तथा अंकुश धारिणी हैं ॥१२९॥

इसका अर्थ स्पष्ट है ॥१२९॥

इस चक्र में देवता की पूजा करने से यह सिद्धि मिलती है—

इस चक्र में निर्दिष्ट देवताओं की पूजा करने वाला साधक प्राण की शुद्धि से उत्पन्न लघिमा सिद्धि को प्राप्त कर लेता है॥

"उस प्रलयावस्था में वह अकेला ब्रह्म ही बिना प्राण वायु के अपनी स्वधा शक्ति से जीवित था" इस श्रुति के अनुसार विश्व में प्राण का संचार करने वाली अपनी स्वधा शक्ति के साथ एकरस होकर जो अवस्थित है, उस परम कारण में लीन हो जाना ही प्राण आदि वायुओं की शुद्धि मानी जाती है। यहाँ प्राण शब्द समस्त वायुओं का संग्राहक है। इससे समस्त पवनों की लयरूप शुद्धि के हो जाने पर मनोलय स्वरूप समाधि लग जाती है। तब उस परम तत्त्व के साथ समरस हुए साधक जीव को तदनुरूप लघिमा सिद्धि प्राप्त हो जाती है ॥१३०॥

साधक को यहाँ सभी उपचारों से चक्रेश्वरी त्रिपुरेशी की पूजा करनी चाहिये ॥१३०॥

१. करा एताः–ख. ने. च. छ. ज. झ. उ.। २. प्रीणन–ख. ने. ज.। ३. सुधया–ख. ने. झ. उ.।

यादृशैरुपचारैः सर्वैर्गन्धादिभिर्मूलदेवी पूजिता, तादृशैरेवोपचारैः सर्वाशापरि[1]पूरणचक्रे चक्रेशी त्रिपुरेशी [2]पूजनीयेत्यर्थः ॥१३०॥

तृतीयचक्रे पूजां सवासनामाह—

**कौलिकानुभवाविष्टभोगपुर्यष्टकाश्रिताः ।**
**वाग्भवाष्टकसंबद्धाः सूक्ष्मा वर्गस्वरूपतः ॥१३१॥**
**तास्तु गुप्ततराः सर्वाः सर्वसंक्षोभणात्मके ।**
**अनङ्गकुसुमाद्यास्तु**

[3]कुलं षट्त्रिंशत्तत्त्वात्मकं शरीरम्, तद्विषयानुभवः कृशोऽहं स्थूलोऽहमित्यादि, तेनाविष्टो जीवस्तदाश्रिततया, तस्य भोगपुर्यष्टकम्

चितिश्चित्तं च चैतन्यं चेतना[4]द्वयकर्म च ।
जीवः कला[5] शरीरं च सूक्ष्मं पुर्यष्टकं मतम् ॥

इति स्वच्छन्दसंग्रहोक्तरीत्या सूक्ष्मपुर्यष्टकम्, तदाश्रिताः । तन्मयतया वाग्भवानामैकाराणामष्टकेन संबद्धाः । सूक्ष्मवर्गं वैखरीवर्णाष्टकवर्गम् । तदुक्तं स्वच्छन्दसंग्रहे—"स्थूलं पञ्चाशदाकारं सूक्ष्ममष्टाष्टकं [1]स्मृतम्" इति । तत्स्वरूपत्वात् तदात्मकत्वात् । गुप्ततराः सूक्ष्मवैखरीवर्णवर्गाष्टकमयत्वादेता अपि सूक्ष्माः, अतो[2]ऽत्यन्तरङ्गतया गुप्ततरा इत्यर्थः । ताः सर्वा अनङ्गकुसुमाद्याः "अनङ्गकुसुमां पूर्वे" (१।१६३) इत्यादिचतुःशतीशास्त्रोक्ताः सर्वसंक्षोभणाह्वये तृतीये चक्रेऽष्टदलकमले, पूज्या इति योज्यम् ॥१३१-१३२॥

तासां ध्यानमाह—

**रक्तकञ्चुकशोभिताः ॥१३२॥**
**वेणीकृतलसत्केशाश्चापबाणधराः शुभाः ।**

स्पष्टम् ।१३२-१३३॥

**तत्तदाकारबुद्ध्यात्मभोग्यभोक्तुर्महीशितुः[3] ॥१३३॥**
**पिण्डादिपदविश्रान्तिसौन्दर्यगुणसंयुता ।**
**चक्रेश्वरी बुद्धिशुद्धिरूपा च परमेश्[4]वरी ॥१३४॥**
**महिमासिद्धिरूपा च पूज्या सर्वोपचारकैः ।**

---

जिन जिन गन्ध आदि द्रव्यों से मूलदेवी का पूजन किया गया, उन सभी उपचारों से सर्वाशापरिपूरक चक्र में चक्रेश्वरी त्रिपुरेशी की पूजा करनी चाहिये ॥१३०॥

अब तृतीय चक्र में पूजा और वासना का वर्णन करते हैं—

कौलिक अनुभव से सम्पन्न साधक के भोगपुर्यष्टक में निवास करने वाली, सूक्ष्म वर्ग के रूप में वाग्भवाष्टक से संबद्ध शक्तियाँ गुप्ततर कहलाती हैं। अनङ्गकुसुमा आदि इन गुप्ततर योगिनियों की पूजा सर्वसंक्षोभण नामक चक्र में करनी चाहिये ॥१३१-१३२॥

३६ तत्त्वात्मक शरीर को कुल कहते हैं। तद्विषयक अनुभव है—"मैं कृश हूँ, मैं स्थूल हूँ" इत्यादि। जीव इस तरह के अनुभवों से आविष्ट रहता है। इस जीव के भोगपुर्यष्टक, अर्थात् सूक्ष्म पुर्यष्टक का स्वच्छन्दसंग्रह में इस तरह से वर्णन किया गया है—

चिति, चित्त, चैतन्य, ज्ञानेन्द्रिय, कर्मेन्द्रिय, जीव, कला और शरीर—इन आठ तत्त्वों को सूक्ष्म पुर्यष्टक माना जाता है ॥

जीव के इस सूक्ष्म पुर्यष्टक में ये गुप्ततर योगिनियाँ छिपी रहती हैं। सूक्ष्म पुर्यष्टक में विद्यमान, अत एव सूक्ष्म पुर्यष्टक स्वरूप ये योगिनियाँ आठ वाग्भव (ऐकार) अक्षरों से संबद्ध हैं। वैखरी वर्णों के आठ वर्ग सूक्ष्म वर्ग कहलाते हैं। स्वच्छन्दसंग्रह में बताया गया है—"स्थूल वर्ण पचास आकार वाले और सूक्ष्म अष्टाष्टक वर्ग वाले हैं"। ये गुप्ततर योगिनियाँ अष्टवर्गस्वरूपिणी भी हैं। वैखरी वर्णों के सूक्ष्म वर्गाष्टक से सम्बद्ध होने से ये योगिनियाँ भी गुप्ततर हैं, सूक्ष्म हैं। इस तरह से अति अन्तरंग होने से गुप्ततर हैं। चतुःशती शास्त्र (१।१६३-१६४) में वर्णित इन सब अनङ्गकुसुमा आदि योगिनियों की सर्वसंक्षोभण नामक तृतीय चक्र में, अष्टदल कमल में पूजा करनी चाहिये ॥१३१-१३२॥

इनका ध्यान इस तरह से किया जाय—

रक्त कंचुक पहने हुए और केशों का जूड़ा बाँधे हुए ये शुभ शक्तियाँ धनुष और बाण धारण किये हुए हैं ॥१३२-१३३॥

अर्थ स्पष्ट है ॥१३२-१३३॥

उन उन विषयों का आकार ग्रहण करने वाली बुद्धि के द्वारा विषयाकार भोग्य पदार्थों का भोक्ता प्रमाता (क्षेत्रज्ञ) यहाँ भूपति माना गया है। उस भूपति को पिण्ड आदि पदों में विश्राम दिलाने वाली यह देवी अपने सौन्दर्य गुण के कारण तृतीय चक्र की स्वामिनी त्रिपुरसुन्दरी के नाम से प्रसिद्ध है। साधक की बुद्धि को शुद्ध करने वाली यह परमेश्वरी महिमा सिद्धि को देने वाली है। तृतीय चक्र में सर्वविध उपचारों से इसकी पूजा करनी चाहिये ॥१३३-१३५॥

---

१. 'परि' नास्ति–ख. ने. ज. झ. उ. । २. पूज्येति–ख. ने. ज. झ. उ. । ३. 'कुलं⋯शुभाः । स्पष्टम्' नास्ति–ख. ने. ज. ब. उ. । ४. ह्वय–झ. । ५. कला च देवेशि–क. झ. ।

१. मतम्–झ. । २. त्यन्तान्त–झ. । ३. महेशितुः–क. ग. छ. । ४. श्वरि–ख. ने. च. छ. झ. उ. ।

संग्रहः। तार्तीयबीजशिखरवर्त्यर्धचन्द्ररोधिनीनादेषु स्वात्मचैतन्याभिव्यक्तिकारण-[1]नादकलनात्मकं तुर्यं तुरीयं भावनीयमित्यर्थः ॥१७९-१८०॥

[2]तुर्यातीतभावनामाह—

**तुर्यातीतं सुखस्थानं नादान्तादिस्थितं प्रिये ॥१८०॥**
**अत्रैव जपकाले तु पञ्चावस्थाः स्मरेद् बुधः ।**

[2]तुर्यातीतम्—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्" (तै० उ० २।४) इत्युपनिषदुक्तरीत्या[3] [4]मनोवागतीतपरमा[5]नन्दस्वरूपं सुखस्थानं नादान्तादिस्थितं[6] नादान्तशक्तिव्यापिकासमनोन्मनासु स्थितं [7]तुर्यातीतं भावनीयमित्यर्थः। अत्रैव शक्तिबीज एव, पञ्चावस्था जागरिताद्याः पूर्वोक्ताः, जपकाले स्मरेद् बुधः पञ्चावस्थानुसन्धानपुरःसरं विद्याजपकरणावधाननिपुणः ॥१८०-१८१॥

---

रोधिनी और नाद स्थानों में अपने चैतन्य को अभिव्यक्ति देनेवाली नाद की स्थिति में साधक के कलनात्मक व्यापार का स्फुरण ही वस्तुतः तुरीय दशा की भावना कही जाती है ॥१७९-१८०॥

अब तुर्यातीत अवस्था की भावना बताते हैं—

हे प्रिये ! तुर्यातीत वह सुखमय स्थान है, जिसकी भावना नादान्त आदि में की जाती है। विद्वान् साधक को चाहिये कि जप करते समय शक्ति बीज में ही इन पाँच अवस्थाओं की भावना करे ॥१८०-१८१॥

"जिस ब्रह्म तक बिना पहुँचे मन सहित इन्द्रियाँ वापस लौट पड़ती हैं, उस ब्रह्म की आनन्द स्वरूपता को जानने वाला (किसी से डरता नहीं)" इस तैत्तिरीय श्रुति के प्रमाण पर मन और वाणी से अतीत परमानन्द स्वरूप सुखमय स्थान ही तुर्यातीत अवस्था है। नादान्त, शक्ति, व्यापिका, समना और उन्मना स्थान में इस तुर्यातीत अवस्था की भावना करनी चाहिये। इस [1]शक्तिबीज में ही यहाँ बताई गई जागरित आदि पाँचों अवस्थाओं का जप के समय विद्वान् साधक को स्मरण करना चाहिये, श्रीविद्या का जप करते समय पूरी सावधानी से इन पाँचों अवस्थाओं का अनुसन्धान करते रहना चाहिये ॥१८०-१८१॥

---

१. णक्वणन्नादात्मकतुरीयरूपं भाव—क.। २. तुरीया—क ग.। ३. क्रमेण—ख. ने. उ.। ४. 'मनो' नास्ति—ख. ने. उ.। ५. परानन्द—ख. ने. झ. उ.। ६. इतः परम्—'विलोमसुखस्थाने स्थितम्' इत्यधिकः पाठः—क. ग., 'विलोमक्रमेणैव सुखस्थानस्थितम्' इति तु—झ.। ७. तुरीया—क. ग.।

1. केवल तृतीय शक्ति बीज में ही बारह कलाओं की भावना की जाती है। इस विषय की चर्चा पहले (३।१७०-१७३) आ चुकी है, अतः इन पाँच अवस्थाओं की भावना भी वहीं की जायगी।



इदानीं सप्तविषुवभावनां विवक्षन्नादौ[1] प्राणविषुवभावनामाह—

**योगः प्राणात्ममनसां विषुवं प्राणसंज्ञकम्[2] ॥१८१॥**

प्राणस्य [3]हकारात्मनो वायोः, आत्मनो यष्टुः, मनसश्च संयोगः प्राणविषुव[4]-मित्युच्यते। तदुक्तं [5]शैवतन्त्रे—"शिष्यात्मप्राणमनसां संयोगं प्राणकं विदुः" इति ॥१८१॥

मन्त्रविषुवभावनामाह—

**आधारोत्थितनादे तु लीनं बुद्ध्वात्मरूपकम् ।**
**संयोगेन वियोगेन मन्त्रार्णानां महेश्वरि ॥१८२॥**
**अनाहताद्याधारान्तं नादात्मत्वविचिन्तनम् ।**
**विषुवं[6]**

आधाराद् मूलाधारात्, उत्थितेन वायुना, [7]संभूते नादे [8]विद्याशिखर-वर्तिनि, आत्मरूपकम् आत्मनो यद् रूपं संविदात्मकमानन्दैकरसीभूतम्, विद्या-

---

अब सात विषुवों की भावना को कहने की इच्छा से पहले प्राण विषुव की भावना बताते हैं—

प्राण, आत्मा और मन के संयोग को प्राणविषुव कहते हैं ॥

हकारात्मक वायु को यहाँ प्राण कहा गया है, आत्मा का अर्थ यहाँ यष्टा (यजन करने वाला) साधक है। प्राण वायु, साधक और मन का संयोग प्राणविषुव कहलाता है। किसी शैवतन्त्र में कहा गया है—'शिष्य की आत्मा, प्राण और मन के संयोग को प्राण-विषुव जानते हैं' ॥१८१॥

मन्त्रविषुव की भावना बताते हैं—

हे महेश्वरि ! मूलाधार से उठे नाद में आत्मस्वरूप को लीन जान कर श्रीविद्या के वर्णों के संयोग और वियोग से अनाहत से ब्रह्मरन्ध्र पर्यन्त सर्वत्र नादात्मकता का चिन्तन ही मन्त्रविषुव है ॥१८२-१८३॥

आधार (मूलाधार) से उठे वायु से पैदा हुए विद्याशिखरवर्ती नाद में संविदात्मक आनन्द से समरस हुआ अपना जो स्वरूप है, साधक को पहले उसे भलीभाँति समझ लेना

---

१. वक्ष्यन्नादौ—क.। २. ज्ञितम्—क. ग.। ३. ककारा—ख. ने. झ. उ.। ४. वदित्यु—ख. ने. ज. झ. उ.। ५. स्वैरतन्त्रे—ख. ग. ने. झ. उ.। ६. 'विषुवं' नास्ति—क. ग.। ७. 'संभूते' नास्ति—क. झ. उ.। ८. 'विद्या''''मन्त्रार्णानां' इत्यस्य स्थाने 'बिन्द्वादिषु वर्तिन्यात्मनो यष्टुः रूपं संविदात्मकं लीनं नादेनैकरसीभूतं बुद्ध्वा मन्त्रार्णानां' इति पाठः—ख. ने. झ. उ.।

मन्त्रार्णानां वाग्भवकामराजशक्तिबीजानाम्, वियोगेन [1]व्यासरूपेण, संयोगेन समष्टिरूपेण [2]तुरीयबीजेन, अनाहताद्याधारान्तम्, अनाहतं हृदयस्थानम्, आधाराणां सर्वेषामन्तस्थानं ब्रह्मरन्ध्रम्, तत्पर्यन्तम् । अत्रान्तशब्दस्तन्त्रेणोच्चारितः । अनाहताद्याधारान्तमिति यावत् । नादात्मत्वविचिन्तन नादस्य यष्टृरूपत्वविभावनं विषुवम्, मन्त्र[3]संज्ञकमिति शेषः । कोऽर्थः ? मूलाधारस्थितवाग्भवशिखरवर्तिनं नादं हृदयपर्यन्तमुच्चार्य तत्र स्वयं लीनो भूत्वा स्वात्मनस्तन्मयतानुसन्धानं मन्त्रविषुवमित्यर्थः । तदुक्तं शैवतन्त्रे—

आत्मनो[4] नादमध्ये तु लयं संचार्य[5] तत्त्वतः ।
अकारोकारवर्णादिसंयोगेन वियोगतः ॥
हृदया[6]दिबिलान्तं च विषुवं मन्त्रसंज्ञकम् । इति ॥१८२-१८३॥

नाडीविषुवभावनामाह—

**[7]नादसंस्पर्शान्नाडीविषुवमुच्यते ॥१८३॥**

चाहिये । इसके बाद श्रीविद्या नामक मन्त्र के वाग्भव, कामराज और शक्ति बीजगत वर्णों की अलग-अलग तथा तुरीय बीज को समष्टिरूप में अनाहत (हृदय) से लेकर समस्त आधारों के अन्त में स्थित ब्रह्मरन्ध्र पर्यन्त भावना करनी चाहिये । यहाँ अन्त शब्द की दो बार आवृत्ति की जाती है । एक अन्त शब्द का अर्थ आधारान्त (ब्रह्मरन्ध्र) और दूसरे अन्त शब्द का अर्थ पर्यन्त होगा, अर्थात् हृदय से लेकर ब्रह्मरन्ध्र पर्यन्त यह भावना की जाती है । यहाँ नाद की आत्मरूपता का चिन्तन किया जाता है, नाद ही यष्टा (साधक) है, ऐसी भावना की जाती है । इसी को मन्त्रविषुव कहा जाता है । इसका अभिप्राय यह है कि मूलाधार स्थित वाग्भव बीज के शिखर में वर्तमान नाद का हृदय पर्यन्त उच्चारण कर साधक उसी में लीन हो जाय और तब अपने में नादमयता का ही अनुसन्धान करे, नादमय मन्त्र में अपने को लीन समझे । इसी को मन्त्रविषुव की भावना कहते हैं । शैवतन्त्र में मन्त्रविषुव का वर्णन इस तरह से किया गया है—

वास्तव में नाद के मध्य में अपना विलय करके अकार, उकार आदि वर्णों का अलग अलग तथा समष्टि रूप में हृदय से ब्रह्मबिल ( रन्ध्र) पर्यन्त उच्चारण ही मन्त्रविषुव कहलाता है ॥१८२-१८३॥

नाडीविषुव की भावना बताते हैं—

हे प्रिये ! कामकलाक्षर से उठा नाद बारह ग्रन्थियों का भेदन करता हुआ जब सुषुम्ना नाड़ी के मार्ग से ब्रह्मरन्ध्र तक पहुँचता है, तब उसका जो नाड़ियों

१. व्यान–क. ग., न्यास–झ. । २. तुर्य–ख. ने. उ. । ३. संज्ञित–क. ग. ज, झ. । ४. आत्मना–क. ग. ज. । ५. संचित्य पञ्चमः–ख. ने. झ. उ. । ६. याद्याधारान्तान्तं–ख. झ. । ७. नादसंस्पर्शनात्तस्य नाडी–क. ग. ।



**द्वादशग्रन्थिभेदेन वर्णाद् [1]नाड्यन्तरे प्रिये ।**

वर्णाद् बीजत्रयशिखरवर्ति[2]कामकलाक्षरात्, द्वादशग्रन्थिभेदेन मूलादिषट्चक्रद्वादशग्रन्थीन् भित्त्वा तेन, नाड्यन्तरे सुषुम्नामध्यमार्गे[3], नादसंस्पर्शात् त्रिबीजशिखरवर्तिनो नादस्य मूलादि[4]ब्रह्मरन्ध्रान्तमुच्चारतः संस्पर्शात्, नाडीविषुवमुच्यते । तदुक्तं शैवतन्त्रे—

[5]मूलमन्त्रत्रिशूलेन भित्त्वा ग्रन्थीननुक्रमात् ।
नादनाडीसमायोगान्नाडीविषुवभावनम् ॥ इति ॥ १८३-१८४ ॥

प्रशान्तविषुवभावनामाह—

**नादयोगः प्रशान्तं[6] तु प्रशान्तेन्द्रियगोचरम् ॥१८४॥**
**वह्निं मायां[7] कलां चैव चेतनामर्धचन्द्रकम् ।**
**रोधिनीनादनादान्तान् शक्तौ लीनान् विभावयेत् ॥१८५॥**

से स्पर्श होता है, उसी को नाडीविषुव कहते हैं ॥१८३-१८४॥

वर्ण का अर्थ है तीनों बीजों के शीर्ष भाग में स्थित कामकला नामक अक्षर । यह मूलाधार आदि षट्चक्र और बारह ग्रन्थियों को भेदकर सुषुम्ना नाडी के मार्ग से ब्रह्मरन्ध्र तक पहुँचता है । तब तीनों बीजों के शिखरवर्ती नादात्मक अक्षर की मूलाधार से उठ कर ब्रह्मरन्ध्र पर्यन्त उच्चरित होने की स्थिति में पूरी सुषुम्ना नाडी इसके स्पर्श से भर जाती है । इसी को नाडीविषुव कहते हैं । शैवतन्त्र में नाडीविषुव का वर्णन इस तरह से किया गया है—

मूलमन्त्र रूपी त्रिशूल से एक एक कर सभी ग्रन्थियों का भेदन कर देने के उपरान्त नाद और नाडी का संयोग परिपूर्ण हो जाता है । इसी को नाडीविषुव की भावना कहते हैं ॥१८३-१८४॥

प्रशान्तविषुव की भावना बताते हैं—

वह्नि, माया, कला, चेतना, अर्धचन्द्र, रोधिनी, नाद और नादान्त का लय शक्ति में हो गया है, ऐसी भावना करे । नाड़ी से संबद्ध नाद यहाँ शक्ति में लीन हो जाता है । प्रशान्त इन्द्रिय वाला साधक ही इसको समझ पाता है, अतः इसे प्रशान्तविषुव कहते हैं ॥१८४-८५॥

१. नामन्तरे–क. ग. । २. र्तिनो नादस्य–क. ग ज. । ३. मार्गेण–ख. ने. झ. उ. । ४. लाद् ब्रह्म–ख ने. झ. उ. । ५. स्थूल–ख. ने. झ. । ६. न्तस्तत्प्र–ख. ने. च. छ. ज. झ. उ. । ७. यां च कालं च–ख. ने. च. छ. झ. ।

वह्नि रेफम्, मायाम् ईकारम्, [1]कलां तन्मध्यवर्तिसपरार्धकलां[2] रेखा-रूपाम्, चेतनां[3] [बिन्दुम्], बिन्दुश्चैतन्यस्य संस्कारः, वेदनरूपत्वात्। तदुक्तं परापञ्चाशिकायाम्—"बिन्दुर्वेद्यस्य संस्कारो विसर्गः[4] सर्ग इत्यसौ" (श्लो० ३७) इति। अर्धचन्द्ररोधिनीनादनादान्तांश्च[5] पूर्वोक्त(१।३१)लक्षणायां[6] [7]शक्तौ लीनान् विभावयेत्। यतोऽयं [8]नादो यष्टुस्तदतीतशक्तिलक्षणः, अतः प्रशान्तेन्द्रियगोचरं सकलेन्द्रियानोतविषयं तत् प्रशान्तविषुवमित्यनुषङ्गः। तदुक्तं शैवतन्त्रे—

अकारोकारवर्णौ च [9]मकारं बिन्दुमेव च।
नादनादान्तसंज्ञे[10] च त्यक्त्वा ब्रह्मादिभिः क्रमात्॥
सप्तमे शक्तिमध्ये तु शिष्यात्मानं विचिन्तयेत्।
प्रशान्तं तद्विजानीयात् प्रशान्तेन्द्रियगोचरम्॥इति॥१८४-१८५॥

---

वह्नि रेफ को, माया ईकार को, कला ईकार के मध्य में विराजमान रेखा रूप सपरार्ध कला को और चेतना बिन्दु को कहते हैं। यह बिन्दु चैतन्य का संस्कार करने वाला है, वेदनरूप है। अतः इसे यहाँ चेतना शब्द से कहा गया है। परापंचाशिका के अनुसार—"बिन्दु वेद्य जगत् का संस्कार तथा विसर्ग सर्गात्मक (सृष्टिस्वरूप) है"। वह्नि आदि के साथ अर्धचन्द्र, रोधिनी, नाद और नादान्त का पूर्व (१।३१) प्रदर्शित लक्षण वाली शक्ति में लय हो गया है, ऐसी भावना करे। चूँकि यह नाद साधक की लोकातीत शक्ति का द्योतक है, अतः इसका साक्षात्कार समस्त इन्द्रियों के प्रशान्त होने पर ही हो सकता है। इस तरह से समस्त इन्द्रियों से अतीत शक्ति कला में लीन करा देने वाली यह स्थिति प्रशान्तविषुव नाम से जानी जाती है। जैसा कि शैवतन्त्र में कहा गया है—

अकार, उकार, मकार, बिन्दु, नाद और नादान्त का ब्रह्म प्रभृति [1]कारणषट्क के साथ परित्याग कर सप्तम शक्तितत्त्व में शिष्य की आत्मा लीन हो गई है, ऐसी भावना करे। प्रशान्त इन्द्रियों के द्वारा गृहीत होने वाली यह स्थिति प्रशान्तविषुव कही जाती है॥१८४-८५॥

१. कालं-ख. ने. झ. उ.। २. कलासंबन्धिरेखारूपं-ख. ने. झ. उ.। ३. चेतना बिन्दुर्वेद्यस्य-ख. ने. झ.। ४. विमर्शः-क. ग. झ.। ५. नादान्ताः-ख. ने. झ. उ.। ६. लक्षणाः-ख. ने. झ. उ.। ७. 'शक्तौ लीनान् विभावयेत्' नास्ति-ख. ने. उ.। ८. प्रशान्तो नादयोगो-ख. ने. झ. उ.। ९. मकारो बिन्दुरेव-क. ग. ज.। १०. शक्तौ च-ख. ने. झ. उ.।

1. नेत्रतन्त्र (२२।१९-२०) में ब्रह्मा, विष्णु, रुद्र, ईश्वर, सदाशिव और शिव का कारणषट्क के रूप में वर्णन किया गया है और कहा गया है कि इन छहों कारणों को छोड़ कर सप्तम निराभास, निरामय पद में साधक को प्रवेश करना चाहिये। यहाँ सप्तम पद के रूप में शक्तितत्त्व का ग्रहण किया गया है। कारणषट्क विषयक अन्य विवरण के लिये लुप्ता० उपो०, पृ० १९९ की दूसरी टिप्पणी देखिये।



शक्तिकालविषुव[1]योर्भावनामाह—

**विषुवं शक्तिसंज्ञं तु तदूर्ध्वं नादचिन्तनम्।**
**तदूर्ध्वं कालविषुवमुन्म[2]नान्तं महेश्वरि॥१८६॥**

तदूर्ध्वं शक्तेरूर्ध्वं समनान्तम्, नादस्य चिन्तनं शक्तिविषुवम्। तदूर्ध्वं समनाया अप्यूर्ध्वम्, "नात्र कालकलामानम्" इति स्वच्छन्दसंग्रहोक्तरीत्या कालातीतोन्मनान्तं नादस्य चिन्तनं कालविषुवम्। तदुक्तं शैवतन्त्रे—

शक्तिमध्यगतो नादः समनान्तं प्रसर्पति।
तच्छक्तिविषवं प्रोक्तमुन्मन्यां कालसंज्ञितम्॥ इति॥१८६॥

ननु कियता कालेन [3]नादस्तत्त्वं वेद[4]यतीत्याह—

**मुनिचन्द्राष्टदशभिस्तु[5]टिभिर्नादवेदनम्।**

स्वस्थे नरे [6]समासीने यावत् स्पन्दति लोचनम्।
तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः॥

---

शक्ति और कालविषुव की भावना बताते हैं—

हे महेश्वरि! शक्ति से ऊपर समना पर्यन्त नाद का चिन्तन शक्तिविषुव और समना से भी ऊपर उन्मना पर्यन्त नाद का चिन्तन कालविषुव कहलाता है॥१८६॥

शक्ति से ऊपर समना पर्यन्त नाद का चिन्तन शक्तिविषुव कहलाता है। समना से भी ऊपर काल की कला से अतीत उन्मना कला में नाद का चिन्तन कालविषुव कहलाता है। स्वच्छन्दसंग्रह में बताया गया है—"उन्मना कला में काल की कला की प्रतीति नहीं होती"। शैवतन्त्र में भी इन दोनों विषुवों का वर्णन मिलता है—

शक्ति कला तक पहुँचा हुआ नाद जब समना पर्यन्त फैल जाता है, तो इसे शक्तिविषुव कहते हैं। नाद के उन्मनी पर्यन्त फैल जाने पर उसको कालविषुव कहा जाता है॥१८६॥

अब प्रश्न होता है कि यह नाद कितने समय में अपने वास्तविक स्वरूप को बताने में समर्थ होता है, उसी का उत्तर यह है—

**मुनि (सात), चन्द्र (एक), आठ और दस (१०८१७) तुटियों में उच्चरित नाद के अन्त में तत्त्व का ज्ञान होता है॥**

"स्वस्थ बैठे हुए मनुष्य की जितने समय में आँख झपकती है, उसका तीसवां भाग तत्पर कहलाता है। तत्पर का शतांश तुटि कहलाता है"। किसी तन्त्रान्तर के इस वचन

१. षुवभा-ख. ने. ज.। २. न्मन्यन्तं-छ. ज. उ.। ३. नादत-झ.। ४. यन्ती-झ.। ५. त्रुटि-क. ग.। ६. सुखा-क. ग.।

तत्परस्य शतांशस्तु [1]तुटिरित्यभिधीयते ।

इति तन्त्रान्तरोक्तरीत्या निमेषस्य त्रिसहस्रतमो भागस्तुटिः[1] । मुनयः सप्त, चन्द्र एकः, अष्ट दश संख्ये प्रसिद्धे । तेन हकाराद्युन्मन्यन्तानां विद्यावयवानां सप्तदशाधि[2]काष्टशतोत्तरदशसहस्र[1]तुटिभिरुच्चारे "अकुले विषुसंज्ञे च" (१।२५) इत्युक्तरीत्या कृते सति नादस्यान्ते तत्त्वस्य वेदनमित्यर्थः ।

तत्त्वविषुवभावनामाह—

**चैतन्यव्यक्तिहेतुश्च विषुवं तत्त्वसंज्ञकम्[3] ॥१८७॥**

[4]चैतन्यस्य स्वात्मतत्त्वस्य, व्यक्तेः प्रकाशस्य,[5] हेतुस्तत्त्वविषुवम् । कोऽर्थः ? उन्मनोर्ध्वेऽनन्तरोक्तसंख्यात[6]तुटिभिर्नादलयात् स्वात्मानुसन्धानं तत्त्वविषुवमित्यर्थः । तदुक्तं शैवतन्त्रे—"स्वाधिकारे परे धाम्नि विषुवं तत्त्वसंज्ञकम्" इति ॥१८७॥

**परं स्थानं महादेवि निसर्गानन्दसुन्दरम् ।**

---

के अनुसार निमेष का तीन हजारवाँ हिस्सा तुटि कहलाता है । मुनि से सात और चन्द्र से एक संख्या ली जाती है । आठ और दस संख्यायें प्रसिद्ध हैं । इस तरह से हकार से उन्मनी पर्यन्त विद्या के अवयवों के उच्चारण में पहले (१।२५) बताई गई विधि के अनुसार १०८१७ तुटि काल लगेगा । इसके साथ ही नाद की समाप्ति पर तत्त्वविषुव की प्रतीति होगी ॥

अब तत्त्वविषुव की भावना बताते हैं—

**चैतन्य की व्यक्ति जिससे होती है, उसको तत्त्वविषुव कहते हैं ॥१८७॥**

चैतन्य स्वात्मतत्त्व को कहते हैं । उसकी व्यक्ति, अर्थात् प्रकाश का कारण तत्त्वविषुव है । इसका अभिप्राय यह है कि उन्मना के ऊपर अभी बताई गई संख्या की तुटियों के बीत जाने पर जब नाद का लय हो जाता है, तब साधक भी स्वात्मानुसन्धान में लीन हो जाता है । उसी स्थिति को तत्त्वविषुव की भावना कहते हैं । शैवतन्त्र में भी बताया गया है—"पर धाम स्वरूप स्वात्मतत्त्व जब अपने अधिकार में आ जाय, तो यही स्थिति तत्त्वविषुव कहलाती है" ॥१८७॥

**हे महादेवि ! पर स्थान स्वाभाविक आनन्द से परिपूर्ण, अत एव परम सुन्दर है ॥**

---

१. त्रुटि–क. ग. । २. काष्ठोत्तर–क. ग., काष्टदशोत्तर–झ. । ३. ज्ञितम्–क. ख. ग. ने. । ४. अनन्तरोक्तरीत्या चैत–क. ग. । ५. शसाम्यहे–ने. । ६. संख्यावत् त्रु–क. ग. ने. ।



परं शून्यषट्कावस्थापञ्चकसप्तविषुवकोलाहलातीतं स्थानम्, विश्वविश्रान्तिभूमित्वाद् निसर्गानन्दसुन्दरम् । सर्वविषयानन्दसमष्टिभूतः परमानन्दो निसर्गानन्दः[1] । अत एवानित्याशुचिक्लेशदुर्भगभेद[2]प्रपञ्चपरिपन्थी पराकारण[3]रूपत्वात् परमानन्दलक्षणपरमप्रेमास्पदपरमसुन्दरपरशिवरूपं निसर्गानन्दसुन्दरमित्यर्थः[4] ॥१८८॥

पूर्वोक्तभावनायाः फलमाह—

**एवं चिन्तयमानस्य जपकालेषु पार्वति ॥१८८॥**

**सिद्धयः सकलास्तूर्णं सिद्ध्यन्ति त्वत्प्रसादतः ।**

एवं पूर्वोक्तप्रकारेण, जपकालेषु[5] । जपाः "आज्ञान्तं सकलं प्रोक्तम्" (१।२७-२८) इत्यादिपूर्वोक्तरीत्या सकल-सकलनिष्कल-केवलनिष्कलरूपास्त्रिविधाः, तेषां कालाः "दीपाकारोऽर्धमात्रश्च" (१।२८-३४) इत्यादिना पूर्वोक्तविद्यावयवानामुच्चारणकालाः, तेषु शून्यषट्कादिकं चिन्तयमानस्य, सकलाः सिद्धयोऽणिमाद्याः

---

ऊपर बताये गये शून्यषट्क, अवस्थापंचक और सप्तविषुव रूपी कोलाहल से दूर यह परम स्थान है, जहाँ कि यह सारा जगत् विश्राम की अनुभूति करता है । यह स्थान निसर्गानन्दसुन्दर है । सभी प्रकार के विषयों के आनन्द का समष्टिभूत आनन्द, जिसकी एक मात्रा के रूप में विषयानन्द स्फुरित होता है, परमानन्द अथवा निसर्गानन्द कहलाता है । इसीलिये यह अनित्य, अशुचि, क्लेश आदि दुर्भाग्य से भरे भेदरूपी प्रपंच का विरोधी है । परा भगवती का भी कारण रूप होने से यह परमानन्दमय परम प्रेमास्पद परमसुन्दर परमशिव का स्वरूप निसर्गानन्द से परिपूर्ण अत एव सुन्दर है ॥ १८८॥

पूर्वोक्त भावना का फल बताते हैं—

**हे पार्वति ! जप करते समय इन सबकी भावना करने वाले साधक को सभी सिद्धियाँ तुम्हारे प्रसाद से शीघ्र ही प्राप्त हो जाती हैं ॥१८८-१८९॥**

जप करते समय पूर्वोक्त प्रकार से शून्यषट्क आदि की भावना करने वाले साधक को सिद्धियाँ प्राप्त हो जाती हैं । सकल, सकलनिष्कल और केवल निष्कल नामक तीन प्रकार के जपों का वर्णन पहले (१।२७-२८) आ चुका है । इनके उच्चारण का काल पहले (१।२८-३४) बताया जा चुका है । श्रीविद्या का इस विधि से जप करते समय, उसके अवयवों का उच्चारण करते समय, शून्यषट्क आदि की भावना करने वाला साधक भगवती के प्रसाद से शीघ्र ही समस्त अणिमा आदि पूर्वोक्त (३।४४) सिद्धियों को

---

१. 'क्लेश' नास्ति–ख. ने. ज. झ. उ. । २. भेदप्रदेशपञ्चकपरि–क. ग. । ३. परत्वात्–क. ग. । ४. 'इत्यर्थः' नास्ति–क. ग. उ. । ५. काले तु–क. ग. उ. ।

पूर्वोक्ताः (३।४४), त्वत्प्रसादतः सिद्धयन्ति । प्रकाशात्मनो मम विमर्शशक्तौ त्वयि प्रसन्नायाम्—"[1]तत्र तत्राक्षमार्गेण चैतन्यं व्यज्यते प्रभोः" (श्लो० ११४) इति विज्ञानभैरवभट्टारकोक्तरीत्या सर्वप्रत्ययमय[2]ता[या]मुपगतायां तव प्रसादात् स्वायत्ता भवन्तीत्यर्थः ॥१८८-१८९॥

**एवं कृत्वा जपं देव्या वामहस्ते निवेदयेत् ॥१८९॥**

एवम् उक्तभावनापुरःसरम्, जपम् उक्तलक्षणं कृत्वा प्रकाशविमर्शसामरस्यरूपाया वामहस्ते विश्वकवलीकारपरे विमर्शमये निवेदयेत् ॥१८९॥

पूजाविधिमुक्त्वा तर्पणविधिमाह—

**अनामाङ्गुष्ठयोगेन तर्पयेच्चक्रदेवताः ।**

अनामा शक्तिः, अङ्गुष्ठः शिवः, तयोर्योगेन मेलनेन, शिवशक्ति[3]मेलापनमुद्रयेत्यर्थः । चक्रदेवताः चतुरस्रादिबैन्दवान्तनवचक्रनिवासिनोः[4] प्रकाशविमर्शसमरसीभूताः, [5]तर्पयेत्, (इत्यर्थः)[6] ।

प्राप्त कर लेता है । प्रकाशात्मक मुझ शिव का तुम विमर्शात्मक शक्ति हो । तुम्हारी प्रसन्नता के मिल जाने पर विज्ञानभैरव भट्टारक को बताई विधि से इन्द्रियों के द्वार से आत्मा के बाहर निकलने पर भी सर्वत्र भगवान् का ही स्वरूप भासित होता है । इस तरह से सभी प्रकार को अनुभूतियों में भगवान् के ही भासित होने पर भगवती की प्रसाद से सभी प्रकार की सिद्धियाँ साधक को स्वायत्त हो जाती हैं ॥१८८-१८९॥

इस तरह जप करके देवी के वामहस्त में उस जप को समर्पित कर दे ॥१८९॥

ऊपर बताई गई भावनाविधि के साथ ऊपर बताये गये जप को पूरा करके प्रकाश-विमर्श-सामरस्यस्वरूपिणी देवी के उस विमर्शमय बायें हाथ में, जिससे पकड़ कर बह देवी सारे विश्व को खा जाती है, समर्पित कर दे ॥१८९॥

पूजाविधि के उपरान्त तर्पण की विधि बताते हैं—

अनामा और अंगुष्ठ के योग से श्रीचक्र में निवास करने वाले देवताओं को तृप्त करे ॥

अनामिका अंगुलो शक्ति को और अंगुष्ठ शिव का प्रतीक है । इनके योग से, इनको मिलाकर, अर्थात् शिवशक्ति की मेलापन मुद्रा से चतुरस्र से बैन्दव पर्यन्त नौ चक्रों में निवास करने वाली प्रकाशविमर्श-सामरस्यमयी समस्त आवरण[1] देवताओं (शक्तियों) को

१. यत्र यत्रा–मु० । २. मध्यता–क. झ. उ. । ३. मेलन–क. ख. ग. । ४. सिन्यः–ख. ने. ज. झ. उ. । ५. 'तर्पयेदित्यर्थः' नास्ति–ख. ने. ज. झ. उ. । ६. 'इत्यर्थः' इत्यनावश्यकः ।

1. एक सौ ग्यारह आवरण देवताओं को चर्चा पहले (२।१७) आ चुकी है ।



[1]प्रदानैस्तर्पणैः सम्यग् विशुद्धैरमृतात्मभिः ।
महाहन्ती[2]करोमोदं विश्वं हव्यवपु[3]र्धरम् ॥ (सु० वा० ३९)

इत्यभियुक्त[4]वचनोक्तरीत्या परस्मिन् लयं भावयेदित्यर्थः ॥१९०॥

तर्पणसाधनानि वस्तून्याह—

**मद्यं मांसं तथा मत्स्यं देव्यै[5] तु विनिवेदयेत् ॥१९०॥**

शिवशक्तिमेलनमुद्रया समस्तमद्यस्य मांसस्य मत्स्यस्य च निवेदनमेव तर्पणमिति भावः ॥१९०॥

समयस्थैरेव[6] सह पूजयेदित्याह—

**[7]कौलाचारसमायुक्तैर्वीरैस्तु सह पूजयेत् ।**

कुलमुक्त(१।५०,३।१३१)लक्षणं हेयतया ज्ञेयं येषां[8] ते कौला दक्षिणादिस्रोतःसु दीक्षिताः, तेषामाचारः "गुरुभक्तिश्च शान्तिश्च पूजा श्रद्धा क्षमा

तृप्त करे । आन्तर तर्पण की विधि सुभगोदयवासना में शिवानन्द मुनि ने इस तरह से बताई है—

शास्त्रप्रदर्शित विधि से परिशुद्ध, अमृतात्मक वस्तुओं के अर्पण और तर्पण के द्वारा मैं इस सारे विश्व को हवि का स्वरूप मानकर आत्माहन्ता में विलीन कर दे रहा हूँ ॥

इसका अभिप्राय यह है कि इस समस्त विश्व को परम तत्त्व में विलीन कर देना ही, इदन्ता का अहन्ता में लय कर देना ही, आन्तर तर्पण है । प्रधानतः साधक को इसी की भावना करनी चाहिये कि यह सारा जगत् मेरे ही स्वरूप में विलीन हो गया है ॥१९०॥

इस तर्पण के साधन द्रव्य ये हैं—

देवी को मद्य, मांस और मत्स्य समर्पित करे ॥१९०॥

शिवशक्ति-मेलनमुद्रा द्वारा समस्त मद्य, मांस और मत्स्य का निवेदन ही तर्पण कहलाता है ॥१९०॥

समय में स्थित व्यक्तियों के साथ ही पूजा करनी चाहिये—

कौलाचार से समायुक्त वीरों के साथ पूजन करे ॥

माता, मान और मेय लक्षण यह जगत् ही कुल है । इसका परित्याग करने के अभिप्राय से जो इस कुल को जानना चाहते हैं, उनको कौल कहते हैं । ये कौल दक्षिणाम्नाय आदि में दीक्षित होते हैं । इनका आचार कौलाचार कहलाता है । स्वच्छन्दसंग्रह

१. नैदानैः–ख. ज. झ. । २. हन्तां–दी. । ३. पुरःसरम्–ज. ग. । ४. क्तोक्त–ख. ने. ज. झ. । ५. देव्यास्तु–क. ग. । ६. स्थेनैव–ख. ने. ज. झ. उ. । ७. कौलिकाचारसं–ख. ने. च. छ. झ. उ. । ८. यैस्ते कौलिकाः–ख. ने. ज. झ. उ. ।

धृतिः'' इत्यादिस्वच्छन्दसंग्रहादिशास्त्रेषु[1] विहितः, तद्युक्तैः । वीरैः,

अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः ।
पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥ (श्लो० ५०)

इति परापञ्चाशिकोक्तरीत्या भेदप्रतीति[2]साधनस्य इदन्तारिपोरहमि [3]समराङ्गणे प्रलयप्रतिपादनपरा[4] वीराः, तैः सह पूजयेत्[5] ।

तन्त्राचारपरिभ्रष्टैः प्रपञ्चव्रतशालिभिः ।
पशुभिः क्षुद्रकर्मस्थैर्न कुर्याद् द्रव्यमेलनम्[6] ॥

इत्यादिवचनसिद्धैः सह न पूजयेदित्यर्थः ॥१९१॥

ननु कस्मिन्नक्षत्रे कस्मिन् वारे कस्मिन् वा दिने पूजेयं कार्येत्यत आह—

**[7]पुष्यभेन तु वारे च सौरे च परमेश्वरि ॥१९१॥**
**गुरोर्दिने स्वनक्षत्रे चतुर्दश्यष्टमीषु च ।**

में—''गुरुभक्ति, शान्ति, पूजा, श्रद्धा, क्षमा, धृति'' इत्यादि का कौलाचार में परिगणन किया गया है। इन आचारों का पालन करने वाले वीर कहलाते हैं। परापंचाशिका में वीरों का स्वरूप इस तरह से वर्णित है—

इदन्ता रूपी शत्रु का अहन्ता में विलय करने के प्रयास में लगा साधक सभी प्रकार के अमंगल का नाश कर देने वाले स्व-स्वरूप को प्राप्त कर लेता है ॥

इसके अनुसार भेदप्रतीति का जो साधन है, उस इदन्ता रूपी शत्रु का सामना करते हुए जो व्यक्ति उसको अभेद प्रतीति के सहारे अपनी अहन्ता में एकरस कर देता है, वही वस्तुतः वीर है। ऐसे वीरों के साथ भगवती की पूजा करनी चाहिये। कहीं कहा गया है—

तन्त्राचार से परिच्युत, प्रपंच भरे व्रतों का पालन करने वाले, क्षुद्र कर्मों के अनुष्ठान में लगे हुए पशुओं के साथ द्रव्यमेलन न करे ॥

इस वचन में जिन अज्ञ जनों का उल्लेख किया गया है, उनके साथ उक्त पूजाविधि का अनुष्ठान नहीं करना चाहिये ॥१९१॥

अब प्रश्न होता है कि किस नक्षत्र, वार और दिन में इस पूजा का अनुष्ठान करना चाहिये, इसका उत्तर देते हैं—

हे परमेश्वरि ! पुष्य नक्षत्र से युक्त रविवार के दिन, गुरु के जन्म और मृत्यु के दिन, अपने जन्म नक्षत्र में, चतुर्दशी और अष्टमी के दिन चक्रगत योगि-

१. शास्त्रे–ख. ज. झ. उ. । २. सारस्य–ख. ने. ज. झ. उ. । ३. रणाङ्गणे–ख. ने. ज. झ. उ. । ४. परैः सह–ख. ने. ज. झ. उ. । ५. इतः परम्–'न तु कातरैः सह पुत्रदारपरिभ्रष्टैः' इत्यधिकं–उ. । ६. भोजनम्–ख. ने. झ. । ७. नित्यं पुष्यदिने वारे–ख. ने. च. छ. ज. ।



**चक्रपूजां विशेषेण योगिनीनां समाचरेत् ॥१९२॥**

''नित्यं सम्पूजयेद् देवीं सासनां सावृतिं क्रमात्'' इति स्वच्छन्दसंग्रहादिशास्त्रेषु [1]यद्यपि प्रतिदिनं पूजा विहिता, तथापि पुष्यभेन पुष्यनक्षत्रेण सह सौरे वारे, गुरो[2]रुदयव्याप्त्योर्दिने, स्वनक्षत्रे च, चतुर्दश्यष्टमीषु तिथिषु च, चक्रपूजां चतुरस्रादिबैन्दवान्तचक्रगतानां देवतानां पूजां विशेषेण समाचरेत्। नित्यपूजा[3]वन्न भवति, किन्तु नैमित्तिकतया [4]अष्टाष्टकादियोगिनीगणप्रीणनपुरःसरं पूजयेदित्यर्थः ॥१९१-१९२॥

ननु[5] चक्रेऽष्टाष्टकपूजनं कथं संगच्छत इति शङ्कामपनुदन् विशेषपूजामेव विवृणोति—

**चतुःषष्टिर्यतः कोट्यो योगिनीनां महौजसाम् ।**
**चक्रमेतत् समाश्रित्य संस्थिता वीरवन्दिते ॥१९३॥**
**अष्टाष्टकं तु कर्तव्यं वित्तशाठ्यविवर्जितम् ।**

[7]त्रैलोक्यमोहनचक्रनिवासिनीनां ब्राह्म्याद्यादीनामंशभूता अक्षोभ्याद्याश्चतुःषष्टि-

नियों (शक्तियों) की पूजा विशेष रूप से करे ॥१९१-१९२॥

स्वच्छन्दसंग्रह में बताया गया है—''आसन और आवरण देवताओं के साथ देवी की नित्य पूजा करे''। इस तरह से यद्यपि प्रतिदिन पूजा का विधान है, तो भी पुष्य नक्षत्र से संयुक्त रविवार के दिन, अपने गुरु के उदय (जन्म) और व्याप्ति (मरण) की तिथि में, अपने जन्म नक्षत्र के दिन और चतुर्दशी तथा अष्टमी तिथियों के आने पर चतुरस्र से बैन्दव पर्यन्त चक्रों में विराजमान देवताओं की पूजा विशेष रूप से करनी चाहिये। नित्य पूजा की तरह इसका सामान्य अनुष्ठान न कर इन नैमित्तिक अवसरों पर विशेष पूजा का आयोजन करे। इसका अभिप्राय यह है कि अष्टाष्टक विधान द्वारा योगिनियों की पूर्ण तृप्ति के लिये विशेष पूजा का अनुष्ठान करे ॥ १९१-१९२॥

श्रीचक्र में अष्टाष्टक पूजा की विधि कैसे संभव हो सकती है ? इस शंका का परिहार करते हुए विशेष पूजा का विधान बताते हैं—

हे वीरवन्दिते ! महाप्रभावशालिनी ६४ करोड़ योगिनियां इस चक्र में निवास करती हैं। अतः धन के लोभ को छोड़कर इस चक्र में अष्टाष्टक पूजा का अनुष्ठान करना चाहिये ॥१९३-१९४॥

१. 'यद्यपि' नास्ति–ख. ने. ज. झ. उ. । २. गुरूदय–ख. ने. ज. झ. उ. । ३. तु न–ख. ने. ज. झ. उ. । ४. 'अष्टाष्टकादियोगिनीनाम्' इत्येव–ख. ने. ज. उ. । ५. 'ननु... विवृणोति' नास्ति–ख. ने. ज. । ६. षष्टियुताः–क. ग. उ. । श्लोक एव नि० षो० (४।१७) इत्यत्रापि वर्तते। तत्रापि यत इत्येव पाठः । ७. 'त्रैलोक्यमोहन' नास्ति–ज. झ. ।

योगिन्यः, तासां प्रत्येकमंशभूतानां कोटि[1]संख्याकानाम्, महौजसां महाप्रभावशालिनीनाम्, योगिनीनामुक्त(१।२,२।१७,२।७९)लक्षणानां मिलित्वा[2] चतुःषष्टिकोट्यो यतश्चक्रमेतत् समाश्रित्य संस्थिताः। [3]मध्यमभूगृहान्तश्चतुःषष्टिकोटियोगिनीसमष्टिभूतानामक्षोभ्यादीनाम्, अष्टाष्टकम् अष्टकानामष्टकम्, वित्तशाठ्यविवर्जितं स्वस्व[4]विभववञ्चनाहीनं यथा भवति तथा कर्तव्यम्। [5]अत्र कृतिर्नाम [6]पूजनक्रियायोगोऽभिप्रेतः ॥१९३-१९४॥

ननु तासां पूजने किमायातं ममेत्यत आह—

**त्वमेव तासां रूपेण क्रीडसे विश्वमोहिनी ॥१९४॥**

---

त्रैलोक्यमोहन चक्र में निवास करने वाली ब्राह्मी आदि आठ योगिनियों की अंशभूत [1]अक्षोभ्या आदि चौसठ योगिनियाँ हैं। इनमें से भी प्रत्येक योगिनी के अंश से एक एक करोड़ योगिनियाँ निकलती हैं और इनकी संख्या ६४ करोड़ हो जाती है। ये योगिनियाँ महाप्रभावशालिनी हैं। योगिनियों का स्वरूप पहले (१।२, २।१७, २।७९) बताया जा चुका है। ये सब चौसठ करोड़ योगिनियाँ इसी श्रीचक्र में निवास करती हैं। यहाँ मध्य भूगृह में ६४ करोड़ योगिनियों का प्रतिनिधित्व करने वाली अक्षोभ्या प्रभृति ६४ योगिनियों की [2]अष्टाष्टक (आठ अष्टक) क्रम से पूजा करनी चाहिये। ऐसा करते समय अपने वैभव के अनुसार दिल खोल कर धन खर्च करना चाहिये, इसमें कंजूसी नहीं दिखानी चाहिये। यहाँ कृति (कर्तव्य) पद का संबन्ध पूजन क्रिया से जोड़ना अभिप्रेत है, अर्थात् अष्टाष्टक पूजा करते समय धन का संकोच नहीं करना चाहिये ॥१९३-१९४॥

प्रश्न उठता है कि ऐसा करने से मुझे क्या मिलेगा? इसी का उत्तर देते हैं—

**सारे विश्व को मोहित करने वाली तुम हो इन योगिनियों के रूप में क्रीडा करती हो ॥१९४॥**

---

१. कोटिकोटि—ख. ने. झ.। २. इत्युक्तत्वात्—ख. ने. ज. झ. उ.। ३. मध्यभूगृहोदित—क. ग. उ.। ४. वित्त—क. ग. उ.। ५. 'अत्र कृतिर्नाम' नास्ति—ख. ज.। ६. यागपूजित—ख. ज. झ.।

1. अक्षोभ्या आदि चौसठ योगिनियों के नाम प्रतिष्ठालक्षणसारसमुच्चय (६।३२७-३३५) में ब्रह्मयामल के प्रमाण से दिये गये हैं।

2. अष्टाष्टक शब्द का अर्थ पृ०२११ की दूसरी टिप्पणी में दिया जा चुका है। ब्राह्मी आदि आठ योगिनियों तथा स्वच्छन्द आदि आठ भैरवों में से प्रत्येक के आठ आठ स्वरूप मिलकर इस अष्टाष्टक पद को सार्थक करते हैं। इन चौसठ युगल स्वरूपों की अर्चाविधि ही अष्टाष्टक पूजा कहलाती है।



प्रकाशात्मनो विश्वबोधकस्य ममांशभूता विमर्शरूपिणी त्वमेव बैन्दवचक्रगता, विश्वमोहिनी संसारित्वोपपादनकारिणी, तासां ब्राह्म्यादीनामक्षोभ्यादीनां च रूपेण क्रीडसे,

एका सती भगवतो परमार्थतोऽपि संदृश्यसे[1] बहुविधा ननु नर्तकीव।
(अ० स्त० १८)

इत्यभियुक्तोक्तरीत्या तत्तद्रूपेण परिणमसे। अतस्त्वदंशभूतयोगिनीयजनेन त्वमेव प्रीणासीत्यर्थः ॥१९४॥

ननु व्युत्पत्तिबलादेवागमार्थमवगम्य तत्तत्तन्त्रोदितपूजादिषु प्रवृत्तिः स्यात् किं गुरूपदेशेनेत्याशङ्क्याह—

**अज्ञात्वा तु कुलाचारमयष्ट्वा गुरुपादुकाम्।**
**योऽस्मिन् शास्त्रे प्रवर्तेत तं त्वं पीडयसि ध्रुवम् ॥१९५॥**

स्वप्रकाशशिवमूर्तिरेकिका तद्विमर्शतनुरेकिका तयोः।
सामरस्यवपुरिष्यते परा पादुका परशिवात्मनो गुरोः ॥ (चि०१)

---

अपनी प्रकाशात्मकता के कारण सारे विश्व का बोध कराने वाले मुझ शिव की अंशभूत तुम विमर्शरूपिणी शक्ति हो। तुम ही बैन्दव चक्र में निवास करने वाली और सारे विश्व को मोह में डालकर इस संसार-चक्र को चलाने वाली हो। तुम ही ब्राह्मी प्रभृति और अक्षोभ्या प्रभृति योगिनियों के आठ और चौसठ स्वरूपों को धारण कर इस विश्व में क्रीडा करती हो। अम्बास्तवकार ने ठीक ही कहा है—

भगवती परमार्थतः (वास्तव में) एक ही है। ऐसा होने पर भी नर्तकी (नटी) जैसे अभिनय करते समय अनेक रूप धारण करती है, उसी तरह से यह देवी भी हमारे सामने अनेक रूपों में प्रकट होती है॥

इस प्रकार बैन्दव चक्रनिवासिनी भगवती त्रिपुरसुन्दरी ही इन योगिनियों के रूप में परिणत होती है। अतः तुम्हारी अंशभूत इन योगिनियों की पूजा करने पर यह तुम्हारी ही पूजा होती है, तुम ही इस पूजा से प्रसन्न होकर अपने भक्तों पर अनुग्रह करती हो, उनकी मनोकामना पूरी करती हो ॥१९४॥

यहाँ शंका उठती है कि शास्त्रीय व्युत्पत्ति के आधार पर आगमशास्त्र के अर्थ को जानकर उन उन तन्त्रों में बताई गई पूजाविधि का ज्ञान हो जायगा। ऐसी स्थिति में गुरु की क्या आवश्यकता है? इसका समाधान करते हैं—

**कुलाचार को बिना जाने, गुरुपादुका की बिना पूजा किये, जो व्यक्ति इस शास्त्र में प्रवृत्त होता है, उसको तुम निश्चय ही पीडा पहुँचाती हो ॥१९५॥**

---

१. दृश्यते—ख. ने. ज. झ. उ.। २. यसे—क. ज. ड.।

[1]इत्यस्मदुक्तरीत्या [2]त्रिधामगुरोः । "अविदित्वा कुलाचारं कुलं कौलिकदर्शनम्" । तत्राचारः स्वच्छन्दसंग्रहादिशास्त्रे विहितः, तं गुरुमुखादविज्ञाय योऽस्मिन् शास्त्रे प्रवर्तेत [3]योऽस्मिन् [4]साधने प्रवर्तेत, तदुक्तार्थाचरणपरो भवेत्, तं चुम्बकं[5] साधकाधमम्, त्वं[6] डाकिनीक्रूरयोगिनीरूपेण साधकमांसमज्जादिशोषणादिरूपेण पीडयसि गृह्णासि, ध्रुवं नात्र शङ्का । अतो गुरुमुखादेवा[7]खिलागमार्थानवगम्यास्मिन् शास्त्रे प्रवर्तितव्यम्, अन्यथा निष्फलं स्यादित्यर्थः ॥१९५॥

**एवं ज्ञात्वा वरारोहे कौलाचारपरः सदा ।**
**आवयोः शबलाकारं [8]मद्यं मांसं निवेद्य च ॥१९६॥**
**त्वत्प्रथाप्रसराकारै[9]स्त्वामेव परिभावयेत् ।**

---

स्वयं प्रकाशस्वरूप शिव की एक मूर्ति है और उसका विमर्शशक्तिमय दूसरा शरीर है। इन दोनों के सामरस्यमय शरीर से परा पादुका बनती है, जो कि परमशिव स्वरूप गुरु का देह है ॥

इस तरह से स्वयं व्याख्याकार ने अपने [1]चिद्विलास स्तव में गुरु के प्रकाश, विमर्श और सामरस्यमय तीन तेजस्वी स्वरूपों का वर्णन किया है । इस गुरु से कुलाचार, कुल और कौलिक दर्शन को बिना जानकारी प्राप्त किये किया गया सारा अनुष्ठान निष्फल हो जाता है । स्वच्छन्दसंग्रह प्रभृति शास्त्रों में कुलाचार का उपदेश किया गया है, किन्तु उसको गुरुमुख से जानकर ही इस शास्त्र में प्रवृत्त होना चाहिये । जो गुरुमुख से बिना जाने इस शास्त्र में विहित अनुष्ठान में प्रवृत्त होता है, वह चुम्बक है, अधम साधक है । ऐसे साधक को तुम डाकिनी, क्रूर योगिनी का स्वरूप धारण कर, उस साधक के मांस, मज्जा आदि धातुओं का शोषण कर, पीड़ा पहुँचाती हो, इसमें किसी प्रकार की शंका नहीं करनी चाहिये । इसलिये गुरुमुख से ही समस्त आगमशास्त्र का अर्थ जानकर इस शास्त्र में प्रवृत्त होना चाहिये, अन्यथा सारे किये कराये पर पानी फिर जाता है ॥१९५॥

हे वरारोहे ! ऐसा जान कर कौलाचार का पालन करते हुए साधक को चाहिए कि वह शिव और शक्ति के शबलित आकार वाले मद्य और मांस को समर्पित कर विमर्श शक्ति के स्पन्दन से निकले सभी आकार एकमात्र तुम्हारे ही स्वरूप हैं, ऐसी भावना करे ॥१९६-१९७॥

---

१. इत्यभियुक्तोक्त–ख. ग. ने. ज. झ. उ. । २. 'त्रिधाम' नास्ति–क. । ३. 'यः' नास्ति–क. ग. उ. । ४. शास्त्रे पूर्वोक्तपरमहितपरदेवतायजनपरमार्थसाधकस्तदु–क. ग. । ५. कसाधकं–ख. ग. ने. ज. झ. उ. । ६. 'त्वं डाकिनीक्रूरयोगिनीरूपेण' नास्ति–ख. ग. ने. ज. झ. । ७. खिलमप्यव–क. ग. । ८. मद्यं तत्र–क. ख. ग., देवि तच्च–च. छ. ज. झ., मद्यं तव–उ. । मद्यं मांसमिति दीपिकाव्याख्यातः पाठः । ९. स्त्वय्येव–ख. ने. छ. ज. झ. उ. ।

1. यह श्लोक पहले भी दो बार (पृ० २१०, २२६) उद्धृत हो चुका है ।



वरारोहे "वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" (अ० को० २।६।४) इति निघण्टुः । एवम् उक्तप्रकारेण, ज्ञात्वा गुरुमुखादेव । कौलाचारपरः, कौलिकाः पूर्वोक्त(३।१४४,१९१)लक्षणाः, तेषां विहिताः स्वच्छन्दसंग्रहादिशास्त्रेष्वाचाराः, सदा तदनुष्ठानपरः । आवयोः प्रकाशविमर्शात्मनोः, शबलाकारम् "सुरा शक्तिः शिवो मांसमानन्दो मोक्ष उच्यते" इत्यभियुक्त[1]वचनोक्तरीत्या सामरस्यापादनरूपं तत्पूर्वोक्त(३।९८-१०३)रीत्या शोधितममृतीकृतं [2]मद्यं मांसं निवेद्य । आवयो[3]रित्येव योज्यम् । त्वत्प्रथाप्रसराकाराः । तव विमर्शशक्तेः, प्रथा स्पन्दः, तत्प्रसराः तदुद्भूताः, आकारा यासामावरणदेवतानाम्, तास्तथाविधाः, [4]त्वामेव त्वदन्यतो न [5]प्रथायाताः परिभावयेत्,

---

वरारोहा, मत्तकाशिनी, उत्तमा और वरवर्णिनी—इन चार शब्दों का प्रयोग अमरकोश में उत्कृष्ट गुणों वाली स्त्री के लिये किया गया है । भगवान् शिव यहाँ देवी को 'वरारोहे' कहकर संबोधित कर रहे हैं । कौलिक पद की व्याख्या पहले (३।१४४,१९१) की जा चुकी है । इनके आचारों का वर्णन स्वच्छन्दसंग्रह[1] आदि शास्त्रों में किया गया है । ऊपर बताई गई विधि को गुरुमुख से जानकर कौलाचारपरायण साधक को चाहिये कि इन आचारों का सदा पालन करते हुये प्रकाश और विमर्श स्वरूप शिव और शक्ति के शबल आकार को, शिव और शक्ति के सामरस्यमय स्वरूप को, अभिव्यक्त करने वाले मद्य और मांस को पूर्व प्रदर्शित (३।९८-१०३) अर्घ्यशोधन विधि से पवित्र, अमृतस्वरूप बना कर हम दोनों को समर्पित करे । किसी प्रामाणिक व्यक्ति के वचन के अनुसार—"सुरा शक्ति का, शिव मांस का और आनन्द मोक्ष का वाचक है" । तदनुसार 'आवयोः' पद की आवृत्ति कर पहले इसका संबन्ध मद्य और मांस से तथा बाद में शिव और शक्ति से जोड़ा जाता है, अर्थात् शिवशक्तिमय इन द्रव्यों को शिवशक्ति को ही समर्पित कर देना चाहिये । 'तत्प्रथाप्रसराकाराः' इस समस्त पद का अर्थ है—तुम्हारे, विमर्श शक्ति के स्पन्दन से जिन आकारों, आवरण देवताओं की उत्पत्ति हुई है, वे सब आकार । ये सब आकार तुम ही हो, तुमसे ये आकार अलग नहीं हैं, ऐसी भावना करनी चाहिये । सुभागोदयकार शिवानन्द मुनि ने कहा है—

---

१. क्तोक्त– ज. उ. । २. 'मद्यं मांसं' नास्ति–ख. ने. ज. उ. । ३. योर्नियो–क. ग. । ४. त्वमेव–ख. ने. झ. उ. । ५. पृथग्भूताः–क. ग., पृथग्याताः–ख. ने. उ. ।

1. पहले (३।१९१) उद्धृत स्वच्छन्दसंग्रह के वचन में संक्षेप में इन आचारों का उल्लेख हो चुका है ।

मूलोद्भवं शक्तिचक्रं यतस्तन्मयतां गतम् ।
तस्मिन्नेवाव्यये धाम्नि विलीनं परिभावयेत् ॥(सु० ६७)

इत्यभियुक्त[1]वचनोक्तरीत्या विमर्शशक्तेर्विलासभूताद्याकारायास्ता आवरणदेवतास्तत्रैव विलीना विभावयेदित्यर्थः ॥१९६-१९७॥

**त्वामिच्छाविग्रहां देवीं गुरुरूपां विभावयेत् ॥१९७॥**
**[2]त्वन्मयस्य गुरोः शेषं निवेद्यात्मनि योजयेत् ।**

देवीं [3]विश्वरूपिणीं विश्वानुजिघृक्षया गृहीतलीलाविग्रहाम्, [4]इच्छाविग्रहामित्यर्थः । त्वामेव गुरुरूपां विभावयेत् । त्वन्मयस्य त्वद्रूपस्य, गुरोस्तद्धेतुं निवेद्य, शेषं देवतागुरुनिवेदितशेषम्, आत्मनि योजयेत् । यावत् साधकस्ताभ्यां समरसीभवति, तावच्छेषं स्वयमुपयुञ्जीतेत्यर्थः ॥१९७-१९८॥

बलिनिवेदनमाह—

---

प्रकाश-विमर्श-सामरस्यात्मक मूल-स्वरूप (त्रिपुरा) से उत्पन्न हुआ यह आवरण देवताओं का शक्तिचक्र अब पुनः तन्मय हो गया है, उसी अव्यय तत्त्व में लीन हो गया है, ऐसी भावना करनी चाहिये ।।

इस तरह से विमर्श शक्ति के विलासभूत आद्या भगवती त्रिपुरसुन्दरी के स्वरूप से निकला यह सारा आवरण देवताओं का समूह पुनः उसी मूलस्वरूप से विलीन हो गया है, ऐसी भावना करनी चाहिये ॥१९६-१९७॥

इच्छानुसार स्वरूप धारण करने वाली तुम देवी को ही अपना गुरु माने और तुमको ही नैवेद्य चढ़ाकर देवता और गुरु की पूजा के बाद बचे नैवेद्य को स्वयं ग्रहण करे ॥१९७-१९८॥

भगवती त्रिपुरसुन्दरी देवी ही विश्व का स्वरूप धारण करती है, विश्व पर अनुग्रह करने की इच्छा से वह लीलामय स्वरूपों को धारण करती रहती है । अतः साधक को चाहिये कि वह गुरु के रूप में तुम्हारा ही ध्यान करे । गुरु भगवतीमय है, ऐसी भावना करके वह गुरु को हेतु द्रव्य समर्पित करे और इसके बाद, देवता और गुरु को समर्पित करने के बाद, बचे हुए द्रव्य को स्वयं ग्रहण करे । जितने द्रव्य के ग्रहण से साधक देवता और गुरु के साथ सामरस्यमय स्थिति का अनुभव करता है, उतने ही द्रव्य को वह ग्रहण करे ॥१९७-१९८॥

इसके बाद बलि का निवेदन करे—

---

१. युक्तोक्त्या—ख. ने. झ. उ. । २. शेषं गुरोर्निवेद्याऽपि पश्चादात्मनि—ख. ने. च. छ. ज. झ. उ. । ३. विमर्शं—ख. ने. ज. झ. । ४. 'इच्छाविग्रहाम्' नास्ति—क. ग. ।



**योगिनीनां महादेवि बटुकायात्मरूपिणे ॥१९८॥**
**क्षेत्राणां पतये मह्यं बलिं कुर्वीत हेतुना ।**

योगिनीनां पूर्वोक्त(२।७९)रीत्या मातृमानमेयमरीचीनाम् । आत्मरूपिणे[1] परमानन्दस्पन्दरूपिणे बटुकाय । क्षेत्राणां पतये, क्षेत्राणि शरीराणि, तेषां पतिर्जीवात्मा, तस्मै । मह्यं मदहन्ताविष्टाय । हेतुना मद्येन सद्वितीयेन । बलिं कुर्वीत ।

श्वासद्वयनिरोधेन कुण्डलीत्रयमेलनात् ।
यज्जीवशिवयोरैक्यं तेनासावान्तरो बलिः ॥

---

हे महादेवि ! योगिनियों के प्राणस्वरूप बटुकभैरव को और मुझ क्षेत्रपाल को इसके बाद हेतु द्रव्य से बलि देनी चाहिये ॥१९८-१९९॥

संवित्स्वरूपिणी भगवती की माता, मान और मेयमय किरणें ही पहले (२।७९) बताई गई पद्धति से योगिनियाँ[1] कहलाती हैं । इन योगिनियों के लिये परम आनन्द को स्पन्दित करते हैं भगवान् स्वात्मस्वरूप बटुकभैरव । क्षेत्र शरीर को कहते हैं । इनका पति है जीवात्मा । यह जीवात्मा मुझ शिव के साथ अहन्ता स्थापित किये हुए है, शिवाहन्ता से ओतप्रोत है । इस तरह से इन गुणों से अलंकृत बटुक और क्षेत्रपाल को द्वितीय द्रव्य

---

१. मात्मस्वरूपिणे—ख. ने. ज. झ. उ. ।

1. अमृतानन्द ने यहाँ (पृ० ६-७, ११९, २११) योगिनी शब्द की चार तरह की व्याख्या की है । योगिनीहृदय शब्द की व्याख्या के प्रसंग (पृ० ६-७) में वे कहते हैं कि इस ग्रन्थ में योगिनी (स्वसंवित्स्वरूपिणी भगवती त्रिपुरा) का हृदय (स्वरूप) उसी प्रकार प्रकट हुआ है, जैसे सामान्य जन के हृदय में अपना ज्ञान उन्मिषित होता है । यहाँ योग का अर्थ है जगत् की सारी वस्तुओं के साथ अपनी संवित् (ज्ञान) का समवाय (अविनाभाव) संबन्ध । इससे भासित होने वाली है योगिनी । दूसरी जगह (पृ० ११९) योगिनी और वीरशब्द की व्याख्या करते हुए वे कहते हैं कि जिनका शिव के साथ योग, नित्य संपर्क बना रहता है, वे योगिनियाँ कहलाती हैं । ये हैं विमर्श शक्ति की अंशभूत इच्छा, ज्ञान और क्रिया शक्तियों से अभिव्यक्त हुई भारती, पृथ्वी और रुद्राणी नामक शक्तियाँ । वीर पद का अर्थ पहले (१।६५) बता दिया गया है । प्रकाश की अंशभूत वामा, ज्येष्ठा और रौद्री शक्तियों से अभिव्यक्त सृष्टि-स्थिति-संहार कारक ब्रह्मा, विष्णु और रुद्र नामक वीरों का उक्त भारती, पृथ्वी और रुद्राणी नामक योगिनियों से सदा संपर्क बना रहता है । तीसरी और चौथी व्याख्या वे इस तरह से करते हैं—माता, मान और मेय रूप संवित्तियाँ ही योगिनियाँ कहलाती हैं । उनके मेलन का अर्थ है उनको अन्तर्मुख बना कर परप्रमाता स्वरूप में प्रतिष्ठित कर देना । अथवा ब्राह्मी प्रभृति के अष्टाष्टक स्वरूपों की उपासना के लिये सामयिक शक्तिचक्र को भी योगिनी नाम दिया जाता है । प्रस्तुत स्थल में योगिनी शब्द का तृतीय अर्थ गृहीत है ।

इत्यस्मदुक्तरीत्या सद्वितीयमद्य[1]स्वीकारेणोल्लसिते मनसि, [2]स्वतः प्राणापानयोः संचारे शान्ते, निरस्ते [3]त्रितवलक्षणे भेदे, शिवोऽहमस्मीति स्वान्तरो बलिरित्यर्थः ॥ ॥१९८-१९९॥

ततः स्वैराचारपरो भूयादित्याह—

**[4]नित्यं पिबन् वमन् खादन् स्वेच्छाचारपरः स्वयम् ॥१९९॥**

**अहन्तेदन्तयोरैक्यं भावयन् विहरेत् सुखम् ।**

नित्यं प्रत्यहम्, पिबन् देवतागुरुनिवेदितशेषं हेतुम्, खादन् तच्छेषं खाद्यम्, वमन् द्वयमपीति सामर्थ्याल्लभ्यम् । स्वेच्छाचारपरः

यत्र यत्र मनस्तुष्टिर्मनस्तत्रैव धारयेत् ।

तत्र तत्र परानन्दस्वरूपं सम्प्रकाशते ॥ (श्लो० ७३)

---

के साथ हेतु द्रव्य को बलि समर्पित करे । व्याख्याकार ने स्वयं अपने किसी [1]अन्य ग्रन्थ में कहा है—

प्राण और अपान रूपी दोनों श्वासों का निरोध कर और [2]तीनों कुण्डलिनियों का मेलन कर जो जीव और शिव में ऐक्यभाव स्थापित किया जाता है, इसी को आन्तर बलि कहा जाता है ॥

ऐसा करने से द्वितीय द्रव्य के साथ मद्य का प्रसाद ग्रहण करने के उपरान्त जब मन उल्लसित होता है, तो उस समय प्राण और अपान वायु का संचार स्वतः शान्त हो जाता है तथा माता, मान और मेय रूप त्रिपुटी का सारा प्रपंच भी समाप्त हो जाता है। उस समय मात्र 'मैं शिव हूँ' यह अनुभूति बची रहती है। इस अद्वयप्रतिष्ठात्मक अनुभूति का ही यहाँ आन्तर बलि के नाम से विवरण दिया गया है ॥१९८-१९९॥

इसके बाद साधक यथेच्छ आचरण कर सकता है—

**प्रतिदिन पीता हुआ, वमन करता हुआ, खाता हुआ साधक स्वयं स्वैराचारी हो जाय, अहन्ता और इदन्ता में एकता की भावना करता हुआ सुखपूर्वक विचरण करे ॥१९९-२००॥**

प्रतिदिन देवता और गुरु को समर्पित हेतु द्रव्य के बचे भाग को पीता हुआ, बचे हुए खाद्य पदार्थ को खाता हुआ और दोनों को यथेच्छ वमन करता हुआ साधक स्वैराचार परायण हो जाय । विज्ञानभैरव भट्टारक ने बताया है—

---

१. स्वीकरणोल्लासिते—ख. ने. झ. । २. अत एव—क. ग. ज. । ३. त्रितत्वल—ख. ने. । ४. पिबन्नित्यं—ने. च. छ. ज. झ. उ. ।

1. यह श्लोक भी व्याख्याकार के तत्त्वविमर्शिनी नामक ग्रन्थ का हो सकता है ।

2. टीकाकार इन तीनों कुण्डलिनिय की चर्चा पहले (३।१६९) कर चुके हैं ।



इति विज्ञानभैरवभट्टारकोक्तरीत्या स्वस्य यत्र यत्रेच्छा जायते तत् तदेव शास्त्रविहितम्, यत्र यत्रेच्छा न जायते तत्तदेव शास्त्रनिषिद्धम्[1] । अतः स्वेच्छानुकूलपदार्थाननु[2]भवेत्, तत्प्रतिकूलपदार्थान् परित्यजेदित्यर्थः । अहन्तेदन्तयोरैक्यं भावयन् । अहन्ता ज्ञातृधर्मः, इदन्ता ज्ञेयधर्मः, तयोरैक्यम् "यत्र यत्र मिलिता मरीचयस्तत्र तत्र विभुरेव जृम्भते" इत्यादिपूर्व(२।७९, ३।१४१)प्रतिपादितरीत्या ज्ञातृज्ञेयचैतन्ययोः समरसीकरणलक्षणं [3]ज्ञानम्, तदेवाहमिति भावयन् सुखं विहरेत् । परिपूर्णज्ञानानन्दो भवेदित्यर्थः । तदुक्तं विज्ञानभैरवभट्टारकैः—

जग्धिपानकृतोल्लासरसानन्दविजृम्भणात् ।

भावयेद् भरितावस्थां महानन्दस्ततो भवेत् ॥ (श्लो० ७१)

इति ॥१९९-२००॥

---

जहाँ जहाँ मन की तुष्टि हो, मन को संतोष हो, उसको वहीं स्थिर कर दे । ऐसा करने से साधक के हृदय में उसी स्थिति में परमानन्दमय स्वात्मस्वरूप प्रकाशित हो उठता है ॥

इस तरह से साधक योगी की जिस विषय को प्राप्त करने की इच्छा हो, उसी को शास्त्रविहित माने; जहाँ जहाँ इच्छा न हो, उसी को शास्त्रनिषिद्ध समझे । इस प्रकार अपनी इच्छा के अनुकूल स्वरूप वाले पदार्थों का उपभोग करे और इसके प्रतिकूल पदार्थों का परित्याग कर दे । ऐसा करते समय अहन्ता और इदन्ता में एकता की भावना अवश्य करता रहे । अहन्ता ज्ञाता का धर्म है और इदन्ता ज्ञेय का । इन दोनों में एकता की भावना पहले (पृ० २११, ३३३) उद्धृत स्तोत्रावली के वचन में प्रतिपादित इस पद्धति से की जाती है—"जहां जहां संवित् की किरणें मिलती हैं, इन्द्रियों का विषयों के साथ संपर्क होता है, वहीं वहीं भगवान् शिव का व्यापक स्वरूप आलोकित हो उठता है" । इस तरह से ज्ञाता और ज्ञेय के रूप में स्फुरित हो रहे चैतन्य को समरस करने वाला ज्ञान ही 'मैं वही हूँ' इस प्रत्यभिज्ञा ज्ञान के रूप में अभिव्यक्त होता है । इसी की भावना करता हुआ योगी सुखपूर्वक विचरण करे, अर्थात् परिपूर्ण ज्ञान और आनन्द से सराबोर हो जाय । विज्ञानभैरव भट्टारक ने इस स्थिति का वर्णन इस तरह से किया है—

[1]जग्धि और पान के कारण अभिव्यक्त उल्लास, रस और आनन्द की दशाओं का विस्तार होने पर साधक योगी अपनी भरितावस्था की, अपने परिपूर्ण भैरव स्वरूप की भावना करे । ऐसा करने से वह साधक महानन्द से परिपूर्ण हो उठता है ॥१९९-२००॥

---

१. मपि वर्तते—क. ग. । २. भावयेत्—ख. ने. ज. उ. । ३. जानन्—क. ।

1. जग्धि, पान आदि पदों का अभिप्राय विज्ञानभैरव के भाषानुवाद में देखना चाहिये ।

परमप्रकृतमुपसंहरति—

**एतत् ते कथितं दिव्यं[1] संकेतत्रयमुत्तमम् ॥२००॥**

स्पष्टम्[2] ॥२००॥

सर्वज्ञानोत्तमत्वादत्यन्तगोपनीयमित्याह—

**गोपनीयं प्रयत्नेन स्वगुह्यमिव सुव्रते ।**

यथा स्वगुह्यं योनिं परपुरुषेभ्यो गोपायसि प्रयत्नेन, तथैतदपि[3] संकेतत्रयमनर्हेभ्यो गोपनीयमित्यर्थः ॥२०१॥

ननु [4]केऽनर्हा येभ्यो गोपनीयमित्यत आह—

**चुम्बके ज्ञानलुब्धे च[5] न प्रकाश्यं त्वयानघे ॥२०१॥**

भक्तिहीनो[6]ऽनेकत्रासक्तस्तत्त[7]त्तन्त्रान्तरेषु विद्यामात्रपाठी[8] चुम्बकः । ज्ञानलुब्धः विद्यासाधारण्यात् काव्यनाटकादिविद्यावदत्रापि ज्ञानं सम्पाद्यमिति मन्वानः ।

---

अब परम प्रकृत ( प्रारम्भ में निर्दिष्ट ) विषय का उपसंहार करते हैं—

इस तरह से इन तीन दिव्य और उत्तम संकेतों का मैंने तुम्हें उपदेश किया है ॥२०० ॥

इसका अर्थ स्पष्ट है ॥२००॥

अब यह कहते हैं कि सभी ज्ञानों में उत्तम होने से इसको अत्यन्त गुप्त रखना चाहिये—

हे सुव्रते ! अपने गुह्य के समान इस ज्ञान को भी प्रयत्नपूर्वक गुप्त रखना चाहिये

जैसे तुम अपनी योनि को दूसरे पुरुषों से प्रयत्नपूर्वक छिपाकर रखती हो, उसी तरह से चक्रसंकेत, मन्त्रसंकेत और पूजासंकेत नामक इन तीन संकेतों को भी अयोग्य व्यक्तियों से छिपाकर रखना चाहिये ॥२०१॥

प्रश्न होता है कि वे अयोग्य कौन हैं ? जिनसे कि इन संकेतों में उपदिष्ट ज्ञान को छिपा कर रखना चाहिये ? उत्तर है—

हे अनघे ! चुम्बक और ज्ञान के लोभी व्यक्ति को तुम्हें इनका प्रकाशन नहीं करना चाहिये ॥२०१॥

भक्तिभाव से रहित, अनेक गुरुओं के पास दौड़ लगाने वाला, सभी तन्त्रों में कुछ न कुछ दखल रखने की आदत वाला व्यक्ति चुम्बक कहलाता है । काव्य, नाटक आदि

---

१. सर्वं—क. ग., देवि—उ. । २. स्पष्टमेतत्—ज. । ३. तथेदमपि—ख. ने. । ४. के के—उ. । ५. वा—ख. ने. छ. झ. । ६. नोऽन्यत्रासक्तः—ख. ने. ज. झ. उ. । ७. त्तन्त्रवरेषु—ख. ने. ज. झ. उ. । ८. पाठाच्चु—ख. ज., पाठकश्चु—ने. उ. ।



तयोर्द्वयोरपीदं रहस्यं त्वया न प्रकटीकरणीयमित्यर्थः ॥२०१॥

विध्यति[1]क्रमणादन्यायो न करणीय इत्यत आह—

**अन्यायेन न दातव्यं नास्तिकानां महेश्वरि ।**

विध्यतिक्रम एवान्यायः । नास्ति परलोक इति ये [2]मन्यन्ते [3]चुम्बका बौद्धादयः, ते नास्तिकाः ।

नन्वत्र को विधिरित्यत आह—

**एवं त्वयाऽहमाज्ञप्तो मदिच्छारूपया प्रभो ॥२०२॥**

प्रभो ! जगत्प्रवृत्ति[4]नियमप्रभावशालिनि ! अत एव—"शक्त्या [5]विना शिवे सूक्ष्मे[6] नाम धाम न विद्यते" (४।७) इति चतुःशतीशास्त्रोक्तरीत्या त्वया विनाऽहं किमपि कर्तुं [7]न शक्तः, वक्तुं न समर्थः । तन्मदिच्छारूपया ममाऽखिलेश्वरस्याऽखिलागमशास्त्रवक्तुरिच्छारूपया [8]विवक्षारूपयाऽनाश्रितकलया । आज्ञप्तः प्रेरितः । ज्ञानमेवमुक्तलक्षणं प्रोक्तवानस्मि । [9]ततस्त्वदाज्ञैव विधिरित्यर्थः ॥२०२॥

---

की तरह तन्त्रशास्त्र को भी सामान्य विद्या मानकर इसका ज्ञान अर्जित करने वाला व्यक्ति ज्ञानलुब्ध कहलाता है । इन दोनों तरह के व्यक्तियों के सामने तुमको इस शास्त्र के रहस्य नहीं प्रकट करने चाहिये ॥२०१॥

अब शिव यह कहते हैं कि इस विधि का अतिक्रमण कर अन्याय न करें—

हे महेश्वरि ! नास्तिकों को इस रहस्य ज्ञान का उपदेश कर अन्याय नहीं करना चाहिये ॥

विधि का अतिक्रमण ही यहाँ अन्याय कहलाता है । परलोक नहीं है, ऐसा मानने वाले चुम्बक बौद्ध आदि को नास्तिक कहा जाता है ॥

प्रश्न उठता है कि ऐसा हम क्यों करें ? इसका उत्तर है—

हे स्वामिनि ! मेरी इच्छा शक्ति के रूप में प्रकट होकर तुमने ही मुझे ऐसा करने की आज्ञा दी है ॥२०२॥

'प्रभो' यह संबोधन देवी के प्रति है, क्योंकि वह इस जगत् की सृष्टि और संहार को करने में समर्थ है । इसीलिये चतुःशती शास्त्र (४।७) में बताया गया है—"शक्ति के बिना सूक्ष्म निराकार शिव में नाम और धाम (स्थान) की भी कल्पना नहीं की जा सकती ।" इस तरह से तुम्हारे बिना मैं कुछ भी करने और कहने में असमर्थ हूँ । इसका

---

१. क्रमादन्यायेन न—क. ग. । २. मन्वते—ख. ज. झ. उ. । ३. 'चुम्बका' नास्ति—ख. ने. ज. झ. उ. । ४. प्रवृत्तिनिवृत्ति—ख. ने. उ. । ५. हीने—क. ग. । ६. शून्ये—क. ग. । ७. 'न शक्तः' नास्ति—ख. ने. झ. उ. । ८. 'विवक्षारूपया' नास्ति—ख. ने. ज. झ. उ. । ९. 'ततः ....रित्यर्थः' नास्ति—ख. ने. ज. उ., अतो भवदाज्ञैव—झ. ।

[1]अतस्तदतिक्रमे महदनिष्टं स्यादित्याह—

**[2]अन्यायेन तु यो दद्यात् स परेतो भविष्यति ।**

अतस्त्वदाज्ञाविधिमुल्लङ्घ्य चुम्बकादिभ्यो य एतज्ज्ञानं दद्यात् स परेतो भविष्यति ॥

एतत्परिज्ञानफलमाह—

**संकेतं यो[3] विजानाति योगिनीनां भवेत् प्रियः ॥२०३॥**

एतत् संकेतत्रयम् । गुरुमुखादेव यो[4] विजानाति, स योगिनीनाम्, योगः परमशिवसमवायः, तद्वत्यः परमचिन्मरीचिभूताः शक्तयस्तासाम्, प्रियः परमशिवः, तस्यानन्त[5]शक्तिमत्त्वात् । तदुक्तं तन्त्रान्तरे—'शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु

भाव यह है कि यद्यपि मैं इस सारे जगत् का स्वामी हूँ और समस्त शास्त्रों का उपदेश भी मैं ही करता हूँ, तो भी मुझ शिव की इच्छाशक्तिरूपिणी विवक्षा रूप अनाश्रित कला से अनुमति प्राप्त करके ही मैंने इस ज्ञान का उपदेश किया है । इस तरह से तुम्हारी आज्ञा ही यहाँ [1]विधिवाक्य है ।

इस लिये उस विधिवाक्य को न मानने पर बहुत अनिष्ट हो सकता है, यही बात अब कही जा रही है—

जो व्यक्ति अन्यायपूर्वक इस ज्ञान का उपदेश करेगा, उसकी मृत्यु हो जायगी ॥

इसलिये तुम्हारी आज्ञा का, आदेशात्मक विधिवाक्य का उल्लंघन कर चुम्बक प्रभृति को जो व्यक्ति इस ज्ञान का उपदेश करेगा, वह अवश्य ही मर जायेगा ॥

अब इस ज्ञान को जानने का फल बताते हैं—

जो व्यक्ति संकेतों को जानता है, वह योगिनियों का प्रिय बन जाता है ॥२०३॥

यहाँ उपदिष्ट तीनों संकेतों को जो व्यक्ति गुरुमुख से जान लेता है, वह साधक योगिनियों का प्रिय बन जाना है । परमशिव के साथ समवाय, अर्थात् अविनाभाव संबन्ध को योग कहते हैं । शिव के साथ नित्य समवाय संबन्ध से रहने वाली परम चितिशक्ति

१. 'अत''''दित्याह' नास्ति—ख. ने. ज. उ. । २. अज्ञानेन—क. ग., नास्त्येषा पङ्क्तिः—ख. च. छ. । ३. योऽभि—ख. ने. च. छ. ज. झ. । ४. योऽभि—ख. ज. झ. उ । ५. शक्तित्वात्—ख. ने. ज. झ. उ. ।

1. वैदिक वाङ्मय और मीमांसाशास्त्र में विधि और निषेध वाक्यों को प्रवृत्ति और निवृत्ति का कारण माना गया है । लिङ् लकार और तव्य आदि प्रत्ययों से विधिवाक्य का बोध होता है । प्रस्तुत स्थल में विधि शब्द का प्रयोग इसी अर्थ में हुआ है ।



महेश्वरः" इति । [1]परमशिव एव भवेदित्यर्थः ॥२०३॥

[2]ननु परशिवतादात्म्ये[3] कः पुरुषार्थ इत्यत आह—

**सर्वेप्सितफलावाप्तिः सर्वकामफलाश्रयः ।**

यतः सर्वेषां जनानां [4]काम्यानां काम्यमानानां फलानामाश्रयः परमशिवः, अतः [5]सर्वेप्सितफलावाप्तिः सर्वेषां यानीप्सितानि स्पृहणीयानि फलानि, तेषां प्राप्तिः परमशिव[6]तादात्म्यपरिज्ञानाद् भवति । स एव परमपुरुषार्थ इत्यर्थः ॥

की किरणात्मक शक्तियाँ योगिनियाँ हैं । इन योगिनियों का प्रिय बन जाता है, साक्षात् शिव हो जाता है, क्योंकि वह परमशिव अनन्त शक्तियों से संपन्न है । जैसा कि [1]तन्त्रान्तर में बताया गया है—"यह सारा जगत् इसकी शक्तियाँ हैं, शक्तिमान् अकेला शिव है" । इस तरह से इन तीनों संकेतों को गुरुमुख से जान लेने वाला साधक साक्षात् परमशिव हो जाता है ॥२०३॥

प्रश्न उठता है कि परमशिव बन जाने से साधक को क्या मिलेगा ? इसका उत्तर देते हैं—

परमशिव सभी कामनाओं के फल को देने वाला है, अतः ऐसे साधक की सभी कामनाएँ पूर्ण हो जाती हैं ॥

चूँकि सभी मनुष्यों की कामनाओं का, अभिलषित फलों का आश्रय परमशिव है, वही मनुष्यों की सारी कामनाओं को पूरा करने वाला है, अतः सभी मनुष्यों के इच्छित फल की प्राप्ति परमशिव के साथ अपने तादात्म्य को समझ लेने से हो जाती है । इसका अभिप्राय यह है कि परमशिव के साथ तादात्म्य बोध ही सब से बड़ा पुरुषार्थ है । इसके प्राप्त हो जाने पर मनुष्य की सारी इच्छाएँ अपने आप पूरी हो जाती हैं ।

१. 'परम''''दित्यर्थः' नास्ति—ख. ज. झ. उ. । २. 'ननु''''आह' नास्ति—ख. ज. उ. । ३. त्म्यवपुषा पुरुषार्थः किमित्यत—क. ग. । ४. 'काम्यानां' नास्ति—क. उ. । ५. 'सर्वेप्सितफलावाप्तिः' नास्ति—ख. ने. ज. झ. उ. । ६. 'तादात्म्य' नास्ति—क. ।

1. शिवसूत्रविमर्शिनी आदि ग्रन्थों में सर्वमङ्गला शास्त्र के नाम से यह वचन उद्धृत है और स्पन्दप्रदोपिकाकार ने इसको रहस्यशास्त्र का वचन माना जाता है । देखिये—लुप्तागमसंग्रह, प्रथम भाग, पृ० ११६ तथा पृ० १४६-१४७ । रहस्यशास्त्र तन्त्रशास्त्र की ही विशेष शाखा का नाम है । यह किसो ग्रन्थ विशेष का नाम नहीं है । परमार्थसार-विवृति (पृ० १०), स्पन्दकारिका रामकण्ठविवृति (पृ० ९) तथा नेत्रतन्त्रोद्योत (२१।३१) में भी सर्वमङ्गला अथवा पारमेश्वर वचन के रूप में इसको स्मरण किया गया है ।

ननु स कुत्र दृश्यते ? इत्यत आह—

**यतोऽपि दृश्यते देवि !**

यतोऽपि[1] यत्र क्वापि बहिरन्तर्वा मनः प्रसरति, तत्र तदनुभवरूपेण स एव दृश्यते, तस्य सर्वगतत्वात् । तदुक्तं विज्ञानभैरवभट्टारकैः—

यत्र यत्र मनो याति बाह्ये [2]वाऽभ्यन्तरे प्रिये ।
तत्र तत्र शिवावस्था व्यापकत्वात् क्व यास्यति ॥ (श्लो० ११३) इति,
[3]तत्र तत्राक्षमार्गेण चैतन्यं व्यजते प्रभोः ॥ (श्लो० ११४) इति च ।

ननु किं[4] सर्वेषामपि तथा दृश्यते ? इत्यत आह—

**[5]कथं विद्वान्न चिन्तयेत् ॥२०४॥**

सत्यं दृश्यते, तथापि न पश्यन्ति, "न मां पश्यति कश्चन" इत्युपनिषदुक्तरीत्या,

---

पुनः प्रश्न होता है कि वह हमें कहाँ दिखाई पड़ता है ? शिव इसका उत्तर देते हैं—
हे देवि ! उसका दर्शन तो जहाँ कहीं भी हो सकता है ॥

जहाँ कहीं भी बाहर या भीतर मन का प्रसार होता है, वहाँ उस अनुभव के रूप में वह परमशिव ही दिखाई पड़ता है, क्योंकि वह सर्वगत है, सर्वत्र विद्यमान है । विज्ञानभैरव भट्टारक ने कहा है—

हे प्रिये ! बाहर या भीतर जहाँ कहीं भी मन जाता है, सर्वत्र अपनी व्यापकता के कारण शिवरूपता विद्यमान है । वह मन इस तरह से उस शिवस्वरूप को छोड़कर और कहाँ जायगा ?

जहां जहाँ मन जायगा, वहाँ वहाँ इन्द्रियों के माध्यम से स्वात्मचैतन्य की ही अभिव्यक्ति होगी ॥

प्रश्न उठता है कि क्या सभी को इसकी प्रतीति हो सकती है ? इसका उत्तर देते हैं—
इसके लिए विद्वान् प्रयत्न क्यों न करे ॥२०४॥

इसकी प्रतीति तो सबको होती है, इसमें कोई सन्देह नहीं है, किन्तु साधारण मनुष्य ऐसा कर नहीं पाता । उपनिषद् में बताया गया है—"मुझे कोई भी नहीं देख पाता" । तन्त्रान्तर में बताया गया है—

---

१. 'अपि' नास्ति—ख. ने. झ. उ. । २. वाभ्यन्तरेऽपि च—ख. ने. ज. झ. उ. । ३. यत्र यत्राक्ष—मु. । ४. कथं तथा—क. ग. झ. । ५. कथञ्चिन्न विचिन्तयेत्—ख. ने. च. छ. ज. ।



प्रत्यक्षगोचरं देवं लोकं [1]चाब्धिप्रमाथिनम् ।
दृष्ट्वा [2]श्रुतिशिरः सान्द्रमनुक्रोशति दुःखितः ॥

इति तन्त्रान्तरोक्तरीत्या दृश्यमानमप्युपदेशहीना न पश्यन्ति । "निष्कलत्वं शिवे बुद्ध्वा" (१।५०) इति निष्कलपरशिवतादात्म्यापरोक्षानुभवशाली गुरुकटाक्षवीक्षणात् त्रुटित[3]समस्त[4]पाशजालः परिस्फुरत्परमशिवाहन्ताविज्ञान इदं [5]कथं न चिन्तयेत्, सर्वत्र समभावं कथं न पश्येदित्यर्थः ॥२०४॥

शिवेनाम्ब[6] ! रहस्यत्वादविस्पष्टतयोदितम् ।
त्वद्रूपं नाथवचनाद् विवृतं [7]नो क्षमस्व तत् ॥

इति श्रीमत्परमयोगीन्द्रपुण्यानन्दशिष्यामृतानन्दयोगिप्रवरविरचितायां
योगिनीहृदयदीपिकायां पूजासंकेतस्तृतीयः ॥
॥ स मा प्त श्चा यं ग्र न्थः ॥

---

भगवान् तो प्रत्यक्ष दिखाई पड़ते हैं, किन्तु अज्ञ जन उनको देख नहीं पाते । मनुष्य समुद्र को मथ डालता है, समस्त वेदान्तशास्त्र को पढ़ डालता है, तब भी उसके स्वरूप को जान नहीं पाता और लाचार होकर दुःखसागर में पड़ा विलाप करता रहता है[1]॥

इस तरह से परम तत्त्व का स्वरूप सबके सामने है, किन्तु जिनको गुरु का उपदेश नहीं प्राप्त हुआ है, उनको यह दिखाई नहीं पड़ता । शिव में, गुरु में और अपने में भी निष्कल शिवरूपता के दर्शन की चर्चा पहले (१।५०) आ चुकी है । तदनुसार निष्कल परमशिव के साथ तादात्म्य की प्रत्यक्ष अनुभूति जिसको होने लगी है, गुरु की कृपादृष्टि के पड़ने से जिसके सारे पाशजाल छिन्न-भिन्न हो गये हैं और जिसकी 'परमशिव मैं ही हूँ' ऐसी प्रत्यभिज्ञा जाग उठी है, वह साधक अपने स्वरूप के साक्षात्कार के लिये प्रयत्न क्यों न करे, अर्थात् सर्वत्र समभाव का दर्शन क्यों न करे ? इसका अभिप्राय यह है कि ऐसे साधक में अवश्य ही समतादृष्टि जाग उठेगी ॥२०४॥

---

१. चाधि—क. ग., चाति—ख. ने. ज. । २. स्मृति—क. ग. उ. । ३. 'समस्त' नास्ति—ख. ने. ज. झ. उ. । ४. माया—ने. ज. झ., प्रमा—उ. । ५. कथञ्चिन्न विचिन्तयेत्—ख. ने. ज. उ. । ६. नातिर—ख. ने. ज. उ. । ७. मोक्षमच्युतम्—ख. ने. ज. उ. ।

१. भट्ट गंगाधर के स्तोत्र तथा क्षेमेन्द्र के गीतानिष्यन्द के नाम से इस तरह के श्लोक उद्धृत मिलते हैं । इन ग्रन्थों की उपलब्धि के अभाव में यह निश्चयपूर्वक नहीं कहा जा सकता कि ये श्लोक वहीं के हैं ।

ओ मा ! शिव ने रहस्य से परिपूर्ण तुम्हारे स्वरूप का उपदेश यहाँ रहस्यमयी अस्पष्ट भाषा में ही किया था। अपने गुरु की आज्ञा मिलने पर मैंने यहाँ उसकी स्पष्ट व्याख्या कर दी है, इसके लिये मुझे आप क्षमा करें ॥

इस तरह से श्रीमत्परमयोगीन्द्र पुण्यानन्द के शिष्य अमृता-
नन्द योगिप्रवर विरचित योगिनीहृदयदीपिका
का यह तीसरा पूजासंकेत प्रकरण
पूरा हुआ ॥ ३ ॥

॥ यह ग्रन्थ भी यहाँ समाप्त होता है ॥

# परापञ्चाशिका

## आद्यनाथविरचिता

[ [1]सर्वसंविन्नदीभेदभिन्नविश्रान्तिभूमये ।
नमः प्रमातृवपुषे शिवचैतन्यसिन्धवे ॥ ]
अकृत्रिमाहमा[2]मर्शप्रकाशैकघनः शिवः ।
शक्त्या विमर्शवपुषा स्वात्मनोऽनन्यरूपया ॥१॥
शिवादिक्षितिपर्यन्तं विश्वं वपुरुदञ्चयन् ।
पञ्चकृत्यमहानाट्यरसिकः क्रीडति प्रभुः ॥२॥
न[3] पार्थ्यगा(र्थक्या)त्मवार्ताऽपि विश्वशक्तिशरीरयोः ।
न[4] विश्वविश्ववपुषोर्भिन्नता कापि तात्त्विकी ॥३॥
भेदे[5] सत्तास्फुरत्ताभ्यां भिन्नं किं नु[6] जगद् भवेत् ।
[7]सत्तास्फुरत्तासम्बन्धात् सत्ताभानं तु[8] तत्र[9] चेत् ॥४॥
असतः किं सतस्ताभ्यां सम्बन्धः सोऽयमिष्यते ।
स्वरूपलाभसुलभः सम्बन्धो नह्यवस्तुनः ॥५॥
[10]न लब्धरूपसम्बन्धस्ताभ्यां [11]किञ्चिदपेक्षते[12] ।
अपेक्षायामवस्थानं न स्यादेतस्य किञ्चन ॥६॥
स्वभावतः स्फुरत्ता च सत्ता च न विनाशिनी[13] ।
विनाशानभ्युपगमे[14] जडताऽपि[15] निवर्तते ॥७॥
ततो गत्यन्तराभावाच्चिदेव परिशिष्यते ।
[16]ततश्चिदैक्यं प्रकृतं [17]जगतो न निवर्तते ॥८॥
प्रकाशा[18]दन्यताभासः स्वात[19]न्त्र्योल्लासकेवलः ।
परिच्छिनत्ति[20] कः शक्तिं शम्भोर्विश्वातिशायिनः ॥९॥

---

१. यो. हृ. दी. (३।४१) परापञ्चाशिकावचनत्वेनोद्धृतः श्लोकोऽयं कस्यामपि मातृकायां न दृश्यते। २. मर्षः–म.। ३. पृथगर्थमर्थवत्ता विश्वविश्वश–मु. ल., नास्ति पङ्क्तिः–स. अक.। ४. नाविश्व–स. अक.। ५. भेद–स. अक. घ.। ६. किन्तु–मु.। ७. नास्ति पङ्क्तिः–अघ.। ८. च–मु. अग. घ.। ९. तन्न–मु.। १०. नालब्धरूपः–स. अक., रूपसंब्रन्धे–मु. ल.। ११. कच्चि–अघ.। १२. क्ष्यते–मु. ल.। १३. शिवम्–स. अक. ख. ग., शिनः–म.। १४. मात्–स. अक. घ.। १५. न–स., च–अघ., विनि–अक.। १६. सतः–मु., सतः शिवै–स., अतः शिवै–अक.। १७. जडतो न–स. म. अख. ग. घ., कदाचिन्न–मु.। १८. शोऽनन्यतो भावः–मु., शादन्यदाभासः–अक.। १९. न्त्र्यादस्ति–स. अक.। २० न्नात्मिका शक्तिः–मु., न्नकलां–अख. ग.।

[1]स्वप्रकाशात्मकं [2]सर्वं [3]तमःकेवलतां गतम् ।
यच्च किञ्चिज्जगत्यस्मिन्[4] प्रकाशान्नाति[5]रिच्यते ॥१०॥
विमर्शसरणीं[6] प्राप्तमित्येषा तात्त्विकी [7]गतिः ।
अवधा[8]नैकतानानां मतिरेवात्र साक्षिणी ॥१२॥
किं [9]प्रमाणैर्वराकैस्तैश्चिदनुप्राणितात्मभिः ।
नहि वैकर्तनं ज्योतिर्दीपालोकमपेक्षते ॥१२॥
[10] शक्तिपातपवित्रे[11]ऽस्मिन् धीतत्त्वे[12] च परीक्ष्यताम् ।
आदर्शे[13] विमलाभोगे[14] ननु[15] सर्वं प्रकाशते ॥१३॥
इत्थं चिदात्मकं [16]सर्वं षट्त्रिंशद्[17]भेदमुद्रितम् ।
आदौ [18]शुद्धात्मकं [19]तत्त्वं पञ्चधा [20]तमसः परम् ॥१४॥
शिवः शक्तिश्च सादाख्यमीशो विद्येति भिद्यते[21] ।
[22]अक्षादिशान्तवर्णात्मा निर[23]णायि शिवेन तु[24] ॥१५॥
कलाविद्ये[25] रागकालौ[26] नियतिर्बन्ध उच्यते ।
मायापूर्वो[27] वकारादि[28]यकारान्ता[29]क्षरात्मकः ॥१६॥
पुमान् शक्तिर्मनो बुद्धिरहङ्[30]क्नमादिपञ्चकम् ।
श्रोत्रादिपञ्चकं [31]नादि [32]णादि वागादिपञ्चकम् ॥१७॥
तन्मात्रपञ्चकं [33]ञादि [34]ङादि व्योमादिपञ्चकम् ।
सिसृक्षोः प्रथम[35]स्पन्दः शिवतत्त्वं [36]प्रभोः स्मृतम् ॥१८॥

१. यत्–मु. अख. ग. घ. म. । २. विश्वं–अघ. । ३. तत्त्वं–अख. ग. घ. म. । ४. देतत्–मु., न्नैतत्–अख. ग. घ. म., च्चैतत्–ल. । ५. दति–मु. म. । ६. सरणि–स. अक. ख. ग. । ७. मतिः–मु. अघ. । ८. भासैक–मु., स्थानैक–स. अक. । ९. वराकैः प्रमाणैस्तै–अख. ग. म. । १०. नास्ति पङ्क्तिः–स. अक. । ११. त्रेषु–अख. ग. म, श्रायां धिया तत्त्वं परीक्षते–अघ. । १२. तत्त्वं सम्प–अख. ग. म. । १३. आदर्श–मु. अघ. । १४. लादर्शे–स. अक. । १५. न तु–मु. ल. अक. । १६. विश्वं–स. अक. घ. । १७. त्तत्त्वमु–स. अक., त्तत्त्वभेदितम्–अख. ग. म., न्द्भेदतत्त्वतः–मु. । १८. चिदा–अख. ग. म. । १९. चक्रं–अख. ग. म. । २०. तु ततः–अख. ग. म. । २१. कथ्यते–स. अक. । २२. हला–स. अक., शक्त्या–अख. ग. घ. म. । २३. मायि–मु. अघ. । २४. तत्–स. अक. ख. ग. म. । २५. विद्या–मु. अख. ग. म. । २६. कालाः–ल. म., काल–मु. । २७. पूर्णो–ल । २८. क्षका–मु. । २९. त्मकः पुमान्–स. अक., क्षरात्मिका शक्तिः–अख. ग. म. । ३०. कारादि–मु. अख. ग. । ३१. तादि–मु. । ३२. टादि–मु. । ३३. चादि–मु. । ३४. कादि–मु. । ३५. प्रथमः–स. । ३६. विभोः–मु. अघ. ।



इच्छैवाऽस्य[1] परिम्लाना शक्तितत्त्वमिति[2] स्मृतम् ।
स्वेच्छया [3]रचितं विश्वमाच्छाद्याऽहन्तया स्थितम् ॥१९॥
तदेव तत्त्वं सादाख्यं [4]सर्वानुग्रहणो[5]न्मुखम् ।
तदेवेश्वरतत्त्वं स्यात् पश्यद् विश्वमिद[6]न्तया ॥२०॥
[7]अहन्तेदन्तयोरैक्यमति[8]र्विद्या निगद्यते ।
स्वाङ्गकल्पेषु[9] भावेषु मायातत्त्वं विभेदधीः ॥२१॥
मायागृहीतसंकोचः[10] शिवः पुंस्तत्त्वमुच्यते ।
अयमेव हि संसारी [11]जीवो [12]भोक्तेति [13]गद्यते ॥२२॥
ज्ञत्व-[14]कर्तृत्व-पूर्णत्व-नित्यत्वाद्याश्च शक्तयः ।
तत्संकोचात् संकुचिताः[15] कलाद्या[16]त्मतया मताः[17] ॥२३॥
मायात्मनः[18] कला[19]नाम किञ्चित्कर्तृत्व[20]कारणम् ।
विद्या किञ्चिज्ज्ञताहेतू रागोऽभिष्वङ्गकारणम् ॥२४॥
कालः परिच्छेद[21]करो नियतिश्चेदमेव मे[22] ।
कर्तव्यं[23] नान्यदित्येषा[24] व्यवस्था [25]यन्त्रणाकृतिः ॥२५॥
प्रकृतिर्गुणसाम्यं स्यादहङ्कारादिजन्मभूः ।
अहं ममेद[26]मित्येतद्बुद्धिहेतु[27]रहङ्कृतिः ॥२६॥
बुद्धिरध्यवसायस्य कारणं निश्चयात्मनः[28] ।
संकल्पस्य विकल्पस्य [29]बीजं मन [30]उदीर्यते ॥२७॥
वचनादेश्च[31] शब्दादेर्वागादिश्रवणादि[32]कम् ।
कारणं श्रवणादीनां ग्राह्यं तन्मात्रपञ्चकम् ॥२८॥

१. इच्छैव सा–मु., इच्छा चास्य–अघ. । २. मुदञ्चयन्–मु., मुदङ्कुरा–स. अक. ख. ग. म., तत्त्वं चिदङ्कुरम्–अघ. । ३. सूचितं–मु. अघ. म., यास्य चितं–अख. ग. । ४. विश्वा-अक., सर्वनिग्र–म. ! ५. णोद्यतम्–मु. । ६. महन्तया–अख. ग. घ. म. । ७. इदन्ताहन्तयोः-मु. स. अक. । ८. मिति–मु., मतिर्विद्येति ग–अक. । ९. रूपेषु –स. अक. ख. ग. म., भूतेषु–अघ. । १०. संकल्पः–ल. । ११. भव्यो–स. अक । १२. भोक्तैव-मु. म., भोक्तेव–ल. अग. स. । १३. दृश्यते–मु. अग. । १४. पूर्णत्व-कर्तृत्व–स. अक. । १५. चितः-मु. अघ. । १६. द्याश्च–अख. ग. घ., ला स्वात्म–म. । १७. मतः-मु., स्थितः–अघ. । १८. त्मकं–मु., त्मना–अघ. । १९. ज्ञेया–अख. ग. म. । २०. लक्षणा–अघ. । २१. च्छित्ति–स., च्छिन्नकलो–अख. ग., च्छिन्न–म. । २२. हि–स. अक. । २३. क्या–अघ. । २४. दित्यङ्ग–स. । २५. मन्त्र–अक. । २६. ममैतदि–स. अक. । २७. रेषा ह्यह–स. अक. । २८. त्मिका–स. अक. । २९. स्थानं–अक. । ३०. इती–स. अक., उदीरितं–अख. ग. म. । ३१. द्यैश्च–स. अक. । ३२. त्मकम्–स. अक. ।

[1]प्रकाशाद्यवकाशादिकारणं भूतपञ्चकम् ।
[2]परापराशक्तिमयं[3] शुद्धविद्यादिपञ्चकम् ॥२९॥

तदन्यदपरा शक्तिरित्येतत् तत्त्वमीरितम् ।
[4]इयं देवी परा शक्तिः [5]शुद्धाशुद्धाध्वगर्भिणी ॥३०॥

पृथिव्यादीनि [6]तत्त्वानि [7]यदा लीनानि कारणे ।
तदा कारणमात्राणि[8] [9]बहिरुद्वमते[10] विभुः ॥३१॥

अनुत्तरेच्छे उन्मेष आनन्देशनमूनता ।
क्रियेच्छाज्ञानशक्तीनां सत्ता चोच्छूनता च षट्[11] ॥३२॥

इच्छेशानान्तरारूढाः स्फुटास्फुटजगन्मयाः ।
चत्वारः परतो वर्णाः षण्ढात्मानः प्रचोदिताः ॥३३॥

अनुत्तरानन्दचिती[12] इच्छाशक्ति[13]नियोजिते ।
त्रिकोणमथ षट्कोणमिच्छायां[14] रूढिमागते ॥३४॥

अनुत्तरानन्दशक्ति[15]त्रिकोणद्वित्वयोगतः ।
[16]तथैवोन्मेषयोगेन क्रियाशक्तेः[17] स्फुटं वपुः ॥३५॥

उक्त[18]त्रिशक्तिसंघट्ट[19]त्रिशूलं द्वैत[20]घस्मरम् ।
परस्परा[21]विरोधेन कार्येषु [22]प्रसरे गते[23] ॥३६॥

न[24] कथञ्चिदुपादेयमासां रूपमिदं भवेत् ।
बिन्दुर्वह्नयस्य संस्कारो विमर्शः सर्ग इत्यसौ ॥३७॥

कलाषोडशकाकारा शक्तिर्विजयते [25]परा ।
तिथयः प्रतिपत्पूर्वाः पञ्च[26]दश्यन्तिमा यथा ॥३८॥

---

१. आका–मु. अख. ग. घ. म. । २. परस्पराश्रयमयं–अक. घ., परम्परा–अख. ग. म., परस्पर–स. । ३. मये शुद्धे–मु. । ४. अथ–स. अक. ख. ग. घ. म. । ५. श्रद्धा-श्रद्धादि–स. अक., शुद्धाशुद्धत्व–अख. ग. घ. म. । ६. भूतानि–अघ. । ७. सदा–स. अक. । ८. रूपाणि–स. अक. । ९. पुनरुद्वमते बहिः–अख. ग. म. । १०. तेऽत्र हि–स. अक., ते हि सा–अघ. । ११. इतः परं मुद्रिते पुस्तके एक एव श्लोको वारद्वयं पठितः, द्वितीयश्च श्लोकस्तत्र न दृश्यते । १२. शक्ती–अख. ग. घ. म. । १३. क्तौ नियोजयेत्–अख. ग. म. । १४. या रूपमागतम्–स. अक. । १५. स्त्रिकोणाद् वृत्ति–मु. ल. । १६. एतेषून्मेषयोगेन–अघ., ते एवो–ल. । १७. शक्ति–स. अक. घ. म. । १८. उक्तं–मु. । १९. ट्टात्–मु. । २०. विश्व–अख. म. । २१. स्परविरोधे तु–मु. स्परविरोधेन–म. । २२. प्रविरोहति–मु. । २३. हते–अख. ग. म. । २४. न केनचि–स. अक., न कैश्चिदुपाद्यं तदासां–अख. ग. म. । २५. सदा–अख. ग. । २६. दशेति मायया–मु., दश्यन्तिमा–अख. ग. ल. म., दश्यन्तिका–अघ. ।



सूर्याचन्द्रमसो[1]रन्तश्चरन्ति[2] स्थितिहेतवः ।
[3]तथा विमर्शवपुषः सर्गस्याद्याः[4] कलाः स्मृताः ॥३९॥

द्विधेयं[5] मातृका देवी बीजयोन्यात्मना स्थिता ।
नित्यप्रवृत्ता[6] शृङ्गाटवपु[7]र्विश्वस्य जन्मभूः ॥४०॥

हृदयं बीजमेतस्यां[8] सारं[9] यत्तत्परं[10] महः ।
वटबीजे यथा वृक्षस्तथात्र[11] निहितं जगत् ॥४१॥

विचार्यमाणे[12] नैवेदं कारणादतिरिच्यते ।
मृदादेः[13] कलशादीनां तत्त्वं नान्यन्निरूपणे[14] ॥४२॥

इत्याहुस्तत्त्ववादिन्यः श्रुतीनामन्तिमा गिरः ।
[15]इह सर्वं सदेवाग्र आसीदिति विनिश्चयात् ॥४३॥

सत्तावाचिनि बीजेऽस्मिन् [16]भाति मायान्तिमं जगत् ।
[17]विलुप्तप्रत्ययाकार[18]मेवैतत् परिशिष्यते ॥४४॥

ततो ज्ञानक्रियासारा[19] विद्येश्वरसदाशिवाः ।
शक्तिशूले[20] विलीयन्ते[21] चतुर्दशकलात्मनि ॥४५॥

ऊर्ध्वाधः सृष्टिवपुषि सर्वं लीनमतः परम् ।
इत्थं परस्यां संवित्तौ सर्वं संकुचितं क्रमात् ॥४६॥

अथ वाङ्मनसातीते यत्र क्वापि निरञ्जने ।
षट्त्रिंशत्तत्त्वलहरीकलहातीतगोचरे ॥
विश्वात्मनि महा[22]मन्त्रस्वभावे[23] सा विलीयते ॥४७॥

---

१. मसो स्वान्तश्चरन्तौ स्थितिहेतवे–मु., मसोश्चोक्ताश्चरन्ति तिथिहेतवः–स. अक. घ. । २. श्चरन्तः–म. । ३. यथा–मु. ल. । ४. स्यादौ–ल., स्यादिकला स्मृता–स अक., सर्गः स्यात् कुलशास्त्रतः–अख. ग. म. । ५. धेत्थं–अख. ग. म. । ६. प्रवृत्त–मु. स. अक., प्रवृत्ति–अघ. । ७. वपुषश्चास्य जन्मनि–अख. ग. म. । ८. मेतस्य–अघ. म. । ९. सारमेतत्–अक., सारं यत्परमं–अघ. । १०. परापरम्–अख. ग. म. । ११. तथास्मिन्–स. अक., तथा संनिहितं–अख. ग. घ. म. । १२. माणं–अक. ख. ग. ल. म., माणमेवेदं कारणान्नातिरिच्यते–अघ. । १३. मृदादि–स. अक. । १४. पणैः–अख. ग. म. । १५. इदं सर्वं सदेवासीदग्रे इ–मु., सदेव सोम्येदमग्र–स. अक. । १६. सादि–अक. ल., मातृ–म. । १७. अलुप्त–स. अक., विशद–अख. म. । १८. मेतत् स–मु., रं परैश्च–अघ., रवृत्तं न–म. । १९. धारा–अख. ग. म. । २०. त्रिशूले ली–मु. म., स्थूले वि–अक. । २१. लिम्पन्ते–अख. ग. । २२. मन्त्रे–मु. स., तन्त्रे–ल. । २३. स्वरूपोऽस्य–अघ. ।

[ [1]शुद्धविद्यादिकं सर्वं सादाख्ये[2] पक्षसंग्रहात् ॥
मध्यशक्तिपरामर्शा इति वापि लयक्रमः ।
[3]अन्यः पक्षोऽपि यः कश्चित् प्रमाणं चेन्न[4] बाधते ॥ ]
[5]कुतश्चिन्मथिते धाम्नि [6]दीप्ते केनापि हेतुना ।
[7]सर्वं हविरिदं जुह्वन्न दारिद्र्येण पीड्यते ॥४८॥
पञ्चपञ्चात्मकं विश्वं पञ्चस्पन्दविजृम्भितम् ।
संकोचयन् परामर्शात्[8] सामान्यस्पन्दकेवलः[9] ॥४९॥
अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः ।
पराक्रमपरो भुङ्क्ते स्वभाव[10]मशिवापहम् ॥५०॥
[11]इति षडधिकत्रिंशद्भेद[12]प्रसक्तजगत्तनुः
प्रसरति [13]महाशक्त्युल्लेखविचित्रमहापटी ।
जयति बहुशः स्पन्दाकारा[14] परा चिदनुत्तरा
विमृशत जनाः किं[15] नो भूयः स्वभावविजृम्भितम् ॥ ५१ ॥
इति श्री[16]मदाद्यनाथविरचिता अनुत्तरप्रकाशपञ्चाशिका
समाप्ता ॥

•

१. पङ्क्तित्रयमधिकम्–स. अक. घ. । २. ख्यं–अघ. । ३. इतः पूर्वम्–'अन्ते शक्तिपरामर्शा इति वाग्विलयक्रमः' इत्यधिकं–अघ. । ४. नैव–अघ. । ५. कुत्रचिन्–अघ. म. । ६. कृत्ये–स., क्लृप्ते–अक. । ७. विश्वं–अख. ग म. । ८. र्शन्–स., र्शी–अक., मर्शो–अघ. । ९. लम्–मु. म. । १०. मशुभाव(प)हम्–अघ. । ११. श्लोक एष नास्ति–स. अक. । १२. प्रवृत्त–अख. ग. म., भेदाप्र–ल. । १३. निजा शक्तिः पर्यायचित्रम–अख. ग. घ. म. । १४. रां परां–अख. ग. । १५. किं तद् यत्नः स्वरूप–अख. ग., किं भयं नः–ल., किं तदुत्तरस्वरूप–म. । १६. श्रीआदिनाथविरचितेऽनुत्तरप्रकाशे रुद्रयामलान्तर्गते श्रीपरापञ्चाशिका सम्पूर्णा–ल. ।

## योगिनीहृदयश्लोकार्धानुक्रमणी

●

## परापञ्चाशिकाश्लोकार्धानुक्रमणी

## मूले दीपिकायां च स्मृता ग्रन्थग्रन्थकाराः

## संकेतपरिचयः

| | | | |
|---|---|---|---|
| अ. को. | अमरकोशः | ज्ञा. वि. | ज्ञानदीपविमर्शिनी |
| अ. व. | अभियुक्तवचनम् | त. धा. | तन्त्रवटधानिका |
| अमृ. | अमृतानन्दः | तन्त्रा. | तन्त्रान्तरम् |
| अ. स्त. | अम्बास्तवः | त. वि. | तत्त्वविमर्शिनी |
| अ. हृ. सू. | अष्टाङ्गहृदयसूत्रस्थानम् | तै. आ. | तैत्तिरीयारण्यकम् |
| आज्ञा. | आज्ञावतारः | तै. उ. | तैत्तिरीयोपनिषत् |
| इ. उ. | इतिहासोपनिषत् | त्रि. म. ना. | त्रिपाद्विभूतिमहानारो-यणोपनिषत् |
| उ. त. | उद्धारोर्ध्वतन्त्रम् | | |
| उ. नि. | उपनिषत् | द. रू. | दशरूपकम् |
| उ. प. | उदयाकरपद्धतिः | धा. | धातुपाठः |
| उ. ष. | उत्तरषट्कम् | न. श. | नवशतीशास्त्रम् |
| ऋ. | ऋग्वेदः | नि. | निघण्टुः |
| ऐ. आ. | ऐतरेयारण्यकम् | नि. षो. | नित्याषोडशिकार्णवः |
| ऐ. उ. | ऐतरेयोपनिषत् | न्या. भा. | न्यायसूत्रभाष्यम् |
| क. उ. | कठोपनिषत् | प. | पद्धतिः |
| का. प्र. | काव्यप्रकाशः | प. क्र. | पराक्रमः |
| का. वि. | कामकलाविलासः | प. त्रिं | परात्रिंशिका |
| कु. का. | कुसुमाञ्जलिकारिका | प. प. | परापञ्चाशिका |
| कु. त. | कुलार्णवतन्त्रम् | प्र. सा. | प्रपञ्चसारः |
| कु. सं. | कुमारसंभवकाव्यम् | प्र. हृ. | प्रत्यभिज्ञाहृदयम् |
| कै. उ. | कैवल्योपनिषत् | प्र. व. | प्रमाणवचनम् |
| क्रमो. | क्रमोदयः | प्रा. व. | प्रामाणिकवचनम् |
| क्र. प. | क्रमोदयपद्धतिः | बृ. उ. | बृहदारण्यकोपनिषत् |
| ग. मि. | गङ्गाधरमिश्रः | ब्र. बि. उ. | ब्रह्मबिन्दूपनिषत् |
| ग. स्तो. | गङ्गाधरस्तोत्रम् | ब्र. सि. | ब्रह्मसिद्धिः |
| ग्रन्था. | ग्रन्थान्तरम् | भ. गी. | भगवद्गीता |
| चि. च. | चिद्गगनचन्द्रिका | म. ना. | महानारायणोपनिषत् |
| चि. स्त. | चिद्विलासस्तवः | म. स्व. सं. | महास्वच्छन्दसंग्रहः |
| छा. उ. | छान्दोग्योपनिषत् | मु. उ. | मुण्डकोपनिषत् |
| ज्ञा. का. | ज्ञानकारिका | मु. क्र. | मुख्याम्नायक्रमः |

| | | | |
|---|---|---|---|
| मु. र. | मुख्याम्नायरहस्यविधिः | सु. | सुभगोदयः |
| यो. सू. | योगसूत्रम् | सु. वा. | सुभगोदयवासना |
| रघु. | रघुवंशकाव्यम् | सौ. सु. | सौभाग्यसुधोदयः |
| ल. स्त. | लघुस्तुतिः | सौ. हृ. | सौभाग्यहृदयस्तोत्रम् |
| वि. भै. | विज्ञानभैरवभट्टारकः | स्तो. | स्तोत्रावली |
| शा. ति. | शारदातिलकम् | स्मृ. | स्मृतिः |
| शै. त. | शैवतन्त्रम् | स्व. भै. | स्वच्छन्दभैरवागमः |
| श्वे. उ. | श्वेताश्वतरोपनिषत् | स्व. सं. | स्वच्छन्दसंग्रहः |
| सं. प. | संकेतपद्धतिः | हं. पा. | हंसपारमेश्वरम् |

## दीपिकोद्धृतवचनानुक्रमणी

१. रसासृङ्–मु. ।

न तु ध्यानं शरीरस्य २२९ वि. भै. १४३
न पूजा बाह्यपुष्पादि २२० सं. प.
न बुद्धिभेदं जन १० भ. गी. ३.२६
नमः प्रमातृवपुषे ३३३ प. प.
न मां पश्यति ३९२ उ. नि.
नयित्वा तं सुषुम्नाधः ५८ स्व. सं.
नलिनीपत्रसंहत्यां ५१ प्र. सा. १.२९
नवकोणमध्य २७ का. वि. २९
नवचक्रक्रमो योऽसौ ३०८ सं. प.
नवनादवर्गरूपा १२३ सौ. सु. २.२०
नवयोनिं समालिख्य २८९ स्व. सं.
नहि वैकर्तनं ज्योति २०५ प. प. १२
नाड्यां ब्रह्मबिले लीन ४६,१७० स्व. सं.
नाड्याधारस्तु नादो १६९ स्व. सं.
नात्र कालकलामानं ४९,२०८,३७३ स्व. सं.
नादनाडीसमायोगा ३७१ शै. त.
नादनादान्तसंज्ञे च ३७२ शै. त.
नाभिस्त्र्यर्धाङ्गुलोपरि ३९ स्व. सं.
निक्षिपाम्यर्चनद्वारा २२३ सु. वा. ३७
नित्यं तस्य निरङ्कुश १४६ सौ. सु. १.३२
नित्यं विषयसंसक्तो १६३ स्व. सं.
नित्यं संपूजयेद् देवीं ३७९ स्व. सं.
नित्यपरिपूर्णतृप्तिः १४७ सौ. सु. १.३७
नित्यक्लिन्नापि च तथा ३०८,३५६ नि. षो. १.२६
नित्या नीलपताका च ३०८, ३५६ नि. षो. १.२७
नित्यार्चनायां लुप्तायां २१५ स्व. सं.
नियतपरिच्छेदकरी १४७ सौ. सु. १.३८
निरीक्ष्यैतादृशाद्वैत १७७
निरोधिकाकलाः पञ्च ४४ स्व. सं
निरोधिकेति सा ४४ स्व. सं.
निर्द्वन्द्वं परमं तत्त्वं ५१, १७५, २०८ स्व. सं.
निर्लक्षणं निर्गुणं च २०२ नि. षो. ४.१५
निवसन् स एव १४६ सौ. सु. १.३०
निवृत्तिश्च प्रतिष्ठा च ४३ स्व. सं.
निवेद्य मस्तकस्थाय २९४ प. क्र.
निष्कलाः परमेशानि ३८ स्व. सं.
नीलतोदयमध्यस्था २०० तै० आ. १०.११.१२
नीलपीतत्वशुक्लत्व १५६ म. स्व. सं.
नीवारशूकवत् तन्वी २०० तै. आ. १०.११.१२
नैर्ऋताम्बुदिशोर्मध्ये २६६ त. वि.
पङ्कजद्वयमीशानि ३५ स्व. सं.
पङ्कजं शाकिनीमध्यं ३९ स्व. सं.
पञ्चबिन्दुमयं भेदं ८० अ. व.
पञ्चमी स्यादुमा देवी २३८ स्व. सं.
पञ्चरूपिणमात्मानं ३०६ अ. व.
पञ्चवक्त्रधराः ४३ स्व. सं.
पञ्चवक्त्रा त्रिनेत्रा ४८,३०४ स्व सं.
पञ्चवक्त्रो दशभुज ३०४ स्व. सं
पञ्चवक्त्रो दशभुजो ४३ स्व. सं.
पञ्चव्योमतनुर्भवेत् ३६४ वि. भै. ३२
पञ्च ह्रस्वाः सन्धिवर्णा ३२९-३३० शा. ति. ७.२
पद्मकिञ्जलकसंकाशः ४५ स्व. सं.
पद्ममध्ये समासीनः ४६ स्व. सं.
पद्ममष्टदलैर्युक्त ३६ स्व. सं.
परधाम बाणलिङ्गं ६१ सौ. सु. ५.४



परशिवरविकर २०,१८२ का. वि. ४
परसादाख्यसंप्राप्तिः ४४ स्व. सं.
पराक्रमपरो भुङ्क्ते ८२,१००,३७८ प. प. ५०
परानन्दस्वरूपं १७२ स्व. भै.
परापरविभागेन ३०५ स्व. सं.
परास्य शक्ति १६,१२८ श्वे. उ. ६.८
परिवार्य स्थिताश्चैताः ४३ स्व. सं.
पवर्गेण पुनः कुम्भो २४० अमृ.
पशवस्त्रिप्रकारास्तु १८१ स्व. सं.
पशवस्त्रिप्रकाराः स्युः १६३ स्व. सं.
पशुभिः क्षुद्रकर्मस्थैः ३७८
पश्चिमोत्तरपौरस्त्य ३४९ नि. षो. १.१७९
पस्पन्दे स स्पन्दः १४६ सौ. सु. १.२८
पातालादिषु लोकेषु २७८ सु. वा. २३
पात्रे त्वासवमापूर्य २९० स्व. सं.
पार्थिवं पङ्कजं ह्येतत् ३७,३२९ स्व. सं.
पिण्डरूपस्य मन्त्रस्य ५२ वि. भै. ४२
पिण्डं कुण्डलिनी ५९ स्व. सं.
पिण्डे मुक्ता पदे मुक्ता ३२२ ज्ञा. का. १.४
पिण्डो वाचकविस्तरस्य १५२,३६० अ. व.
पिनाकिनं च खड्गीशं २९१ स्व. सं.
पुनरज्व्यञ्जनबिन्दु १२४ सौ. सु. २.२४
पुनरेव कामपीठे ६१ सौ. सु. ५.६
पुरुष एवेदं सर्वं १६७ ऋ. १०.९०.२
पुरुषादिकमायान्तं १६९ स्व. सं.
पुरैः परिवृतोऽसंख्यै ४५ स्व. सं.
पुर्यंष्टकशरीराश्च १६४ स्व. सं.
पूर्णपीठं च तन्मध्ये ३८ स्व. सं.
पूर्णाभिषेककर्ता ९ कु. त. १३.१२९
पूर्वाद्युत्तरपर्यन्तं ३०४ स्व. सं.
पृथिवीतत्त्वमाख्यातं १५७ म. स्व. सं.
पृथिवीमण्डलं पीतं १७९ स्व. सं.
पृथ्व्यादिव्योमतत्त्वा १५७ म. स्व. सं.
प्रकाशैकघने धाम्नि २२३ सु. वा. ३७
प्रतिकिञ्जलकसंस्थाभिः ३६ स्व. सं.
प्रतिफलितं तज्ज्योतिः ६१ सौ. सु. ५.६
प्रतिफलितं पर ६१ सौ. सु. ४.१
प्रतिभायाः परोल्लासो ३०१ सं. प.
प्रतिरुचिरुचिरे २०,१८२ का. वि. ४
प्रत्यक्षगोचरं देवं ३९३ तन्त्रा.
प्रत्यङ्मुखेन मनसा २२७ अ. स्त. १९
प्रत्ययैकतानता २२८,३०० यो. सू. ३.२
प्रत्येकमंशभेदेन ९३ सं. प.
प्रदानैस्तर्पणैः सम्यग् २९७,३७७ सु. वा. ३९
प्रमातृमेयप्रमिति २७२ स्व. सं.
प्रयत्नस्तदवाप्तौ ११२ द. रू. १.२०
प्रलयाकलनामान १६३ स्व. सं.
प्रवहच्छ्वासहस्तेन २८६ प. क्र.
प्रविष्टेऽन्तः सीधुरसे २९९ क्रमो.
प्रशान्तं तद्विजानीयात् ३७२ शै. त.
प्रश्नोत्तरपरैर्वाक्यै ४ स्व. त. ८.३१
प्रसुप्तभुजगाकारा ५८ स्व सं.
प्रसृतामृतरश्म्यौघ २९२ सौ. हृ.७
प्राप्नोति सात्त्विका १८८ स्व. सं.
प्रामाण्यप्रवणत्रिशक्ति २९८ अ. व.
प्रोक्ता वह्निकलामन्त्रा २८७ स्व. सं.
फट्कारीं दशपत्रेषु २३९ स्व. सं.
बन्दिनीं भद्रकालीं च २३९ स्व. सं.
बलिः पूजोपहारेऽपि २७६ नि.
बहुधा ह्यागमैर्भिन्नाः ९९ रघु. १०.२६

1. टिप्पणी ६९ पृष्ठस्था द्रष्टव्या ।

### विज्ञानभैरव (अनु० व्रजवल्लभ द्विवेदी)

से मुक्त होने के लिए भारतीय दर्शनशास्त्र में जो उपाय कहे गये है
उपायों का विशेष महत्त्व है। यौगिक उपाय कई प्रकार के हैं, जैसे
योग, भक्तियोग, क्रियायोग आदि। प्रस्तुत शास्त्र विज्ञानभैरव सहज
म कृति है। इसमें ११२ धारणाओं का वर्णन किया गया है। इनमें
वर्ती यौगिक पद्धतियों का उल्लेख समाविष्ट है। अपनी विश्वाहन्ता
र आत्मा-परमात्मा की अद्वैतता का प्रतिष्ठापन करनेवाली यह कृति
ए अतीव उपयोगी सिद्ध होगी।

 और उनके हिन्दी अनुवाद के साथ पचास पृष्ठों की भूमिका,
ी और शब्दानुक्रमणी भी जोड़ दी गई हैं।

मूल्य : (अजिल्द) रु० ४०; (सजिल्द) रु० ५५

### प्रत्यभिज्ञाहृदयम् (अनु० जयदेवसिंह)

सार का प्राचीन धर्म है। इस धर्म की तीन विधाएं हैं : (१) कर्णाटक
(२) तमिलनाडु का शैवसिद्धान्त, (३) कश्मीर का अद्वैत शैवधर्म।
शैवधर्म को तीन शीर्षकों में विभक्त किया जा सकता है : (१)
(२) स्पन्दशास्त्र, (३) प्रत्यभिज्ञाशास्त्र। प्रस्तुत कृति का विषय है
समें शैव सिद्धान्तों की विशद व्याख्या की गई है।

भिज्ञासूत्रों का तथा उनपर संस्कृत भाष्य का हिन्दी में अनुवाद
किया गया है। साथ ही विस्तृत उपोद्घात, सार, टिप्पणियां, कोश
णियां समाविष्ट हैं। शिवयोग की साधना के लिए यह ग्रन्थ अतीव

मूल्य: रु० २०

### श्री श्री परात्रिंशिका (अनु० नीलकण्ठ गुरुटू)

का' काश्मीर शैवदर्शन से सम्बन्धित त्रिकाचार का एक प्रामाणिक
ीन ग्रन्थ है। इसका मूल उद्गम 'रुद्रयामल' तन्त्र है। इस महान्
अवतारणा किसी प्राचीन युग में अनुत्तरीय विमर्श में ही हुई थी।
का दूसरा नाम 'अनुत्तरीय-सूत्र' भी है। इन सूत्रों में भगवान्
 अनुत्तरीय हृदय का अति अद्भुत विश्लेषण प्रस्तुत किया है।
न तत्त्व की सौन्दर्यच्छटा का जितना और जैसा साक्षात्कार विश्वोत्तीर्ण-
ना-लोक में विचरण करने से मिल सकता है उतना ही उसके
श्वमय रूप-विस्तार में भी। अतः सर्वथा धरती के ही आधार पर
अपने ज्ञानचक्षु के द्वारा, विश्वमयी हलचल में ही उस शाश्वत एवं
त्मचेतना का स्पष्ट साक्षात्कार पा लेना ही वीरपुङ्गव का काम
इस दुर्घट काम को पूरा करने के लिए पहले अपने ही अन्तस् में छिपी
उजागर कर लेना आवश्यक है। यह कैसे हो सकता है? यही प्रस्तुत
सन्देश है। मूल्य: (अजिल्द) रु० ७०; (सजिल्द) रु० १००


**मोतीलाल बनारसीदास**

दिल्ली वाराणसी पटना
बंगलौर मद्रास


योगिनीहृदयम्

व्रजवल्लभद्विवेदः


मोतीलाल
बनारसीदास


# योगिनीहृदयम्

## व्रजवल्लभद्विवेदः

